॥ श्रीः ॥

# शिवाद्वैतनिर्णयः

श्रीमद्भरद्वाजकुलजलधिकौस्तुभ-श्रीमदद्वैतविद्याचार्य-
श्रीविश्वजियाजि-श्रीरङ्गराजाध्वरि-तनूजेन
कुवलयानन्दाद्यनेकप्रबन्धकर्तृ-

श्रीमदप्पय्य दीक्षितेन

निर्मितः।

सोयं

चैनपुराख्यग्रामनिवासिना
श्रीबाबू श्रीकण्ठप्रसादनारायणसिंहेन

काश्यां
चन्द्रप्रभा-यन्त्रालये मुद्रापयित्वा
प्रकाशितः।

वैक्रमीय संवत्
१९६२

॥ श्रीगणेशाय नमः ॥

# अथ शिवाद्वैतनिर्णयः ।

श्रीकण्ठशिवाचार्याः सिद्धान्तं निजगदुः शिवाद्वैतम् ।
तत्किं विशिष्टमभिमतं अविशिष्टं वेति चिन्तयामोऽत्र ॥ १ ॥

आरम्भणाधिकरणादिभाष्यागतैर्विशिष्टाद्वैतादिव्यवहारैरा-
द्यपक्षोऽभिमत इत्यनियमाधिकरणादिभाष्यगतैर्निरन्वयोपा-
सकानामिहैव मुक्तिरित्यादिव्यवहारैर्द्वितीयः पक्षोऽभिमत इति
च प्रतीयते न च द्वावपि पक्षौ परमसिद्धान्तभावमर्हत इ-
त्यनयोरेकः परमयं सिद्धान्तो निर्णेतव्यः तदर्थमिह विचारः
क्रियते ।

इदमिह तावत्प्रतिभाति आचार्यैर्ब्रह्ममीमांसाभाष्ये
यत्र यत्र शिवाद्वैतं निरूपितमनूदितं वा तत्र सर्व्वत्रापि
विशिष्टाद्वैतमित्येव व्यवहारो दृश्यते । यथा तावदारम्भणी-
धिकरणे ब्रह्मप्रपञ्चयोर्न वयमात्यन्तभेदवादिनः घटपटयोरिव
तदनन्यत्वपरश्रुतिविरोधात् नचात्यन्ताभेदवादिनः न वा
शुक्तिरजतयोरिवैकतरमिथ्यात्ववादिनः तस्याभाविकगुणभे-
दे परश्रुतिविरोधात् न च भेदाभेदवादिनः वस्तुविरोधात् किं
तु शरीरशरीरिणोरिव गुणगुणिनोरिव विशिष्टाद्वैतवादिन
इति यथा च मोक्षापत्त्यधिकरणे उक्तं पूर्व्वत्र चिदचित्प्रपञ्चनि-

शिष्टः शिव एवाद्वितीयः कारणं कार्यं च भवतीति विशिष्ट शिवाद्वैतमिति शुद्धाद्वैतं त्वीक्षत्यधिकरणे शङ्कोत्तराभ्यां निराकृतम् ।

ननु 'सदेव सोम्येदमग्रासीत् एकमेवाद्वितीय' मित्यादिना सद्रूपं वस्तु निर्विशेषमेवावधारणादवगम्यते कारणावस्थमेतत्कथं सूक्ष्मप्रपञ्चविशिष्टमुच्यत इति तत्र शङ्काग्रन्थः सदेवेत्यवधारणेन न विशेषनिषेधः किन्तु सत्कारणत्वानिषेधः 'असद्वा इदमग्र आसीत् ततो वै सदजायत' इत्यसत्कारणत्वस्य भ्रान्तिप्रसक्तिसत्वात् किं च सदेव सौम्येदमग्र आसीदित्यत्र कथं निर्विशेषत्वं ब्रह्मण आसीदितिहि क्रियाविशेषः । अग्र इति कालो विशेषः । एकमेवेत्यवधारणं अधिष्ठात्रन्तर निषेधपरम् । अद्वितीयमिति जगदुपादानत्वमुच्यते अत एव सर्व्वज्ञमनन्तशक्तिं विशेषं च कथं सर्व्वज्ञत्वसर्व्वशक्तिकत्वविशेषमन्तरेण जगदुभयकारणत्वं ब्रह्मणो भवतीति परिहारग्रन्थः सद्ब्रह्मपदशक्यपर्यालोचनयापि विशिष्टाद्वैतं तत्रैवाधिकरणे समर्थितम् । प्रकृतिप्रत्ययात्मकस्य सत्पदस्य अनेकवस्तुपरत्वं युक्तं प्रकृत्याप्रत्ययेन च तस्य वस्तुद्वयप्रतिपादनपरत्वात् तथाभियुक्तसूक्तिः शक्तिः शिवश्च सच्छब्दप्रकृतिप्रत्ययोदितौ तौ ब्रह्मसामरस्येन समस्तजगदात्मकाविति स्थूलसूक्ष्मचिदचित्प्रपञ्चरूपशक्तिविशिष्टः परमेश्वर एव कार्यकारणरूपसत्पदविषय इति ।

अत्र ब्रह्मेत्येकवचनं शक्तिशिवयोः प्रत्येकं न शक्यता किन्तु शक्तिविशिष्टशिवरूपेणेति ज्ञापनार्थम्। यथा व्यक्त्याकृतिजातयस्तु पदार्थ इति न्यायसूत्रे व्यक्त्याकृतिजातीनां न प्रत्येकं गवादिपदशक्यता किन्तु जात्याकृतिविशिष्टव्यक्तिरूपेणेति ज्ञापनार्थमेकवचनम्। समस्त जगदात्मकाविति विशेषणं तु सद्ब्रह्मशब्दयोः शक्तिविशिष्टशिववाचकत्वमात्रेण न विशिष्टाद्वैतसिद्धिः। तटस्थस्य वियदादिप्रपञ्चस्य सद्भावादितिशङ्कानिराकरणाय तस्य शक्त्यंशतया शक्तिशिवाभ्यामपृथक्सिद्धिप्रदर्शनार्थां तदेतत् स्थूलसूक्ष्मेत्याद्यग्रिमभाष्येण स्पष्टीकृते। तत्र सत्पदस्य दर्शितोर्थः समान एव ब्रह्मपदस्यापि प्रस्तुतत्वात् सत्पदार्थनिर्णयस्य तन्मात्रग्रहणे अत एव भूमाधिकरणे सहभूमशब्देनब्रह्मशब्दस्यार्थे सर्व्वत्रापि प्रपञ्चस्यान्तर्भावो दर्शितः। तत्र हि यत्र 'नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेति' भूमलक्षणवाक्येन कथं भूम्न्यनुभूयमाने अन्यस्य दर्शनाद्यभाव उच्यते प्रपञ्चस्य सतो दर्शनादीनां परिहर्त्तृत्वमशक्यत्त्वादितीमामाशङ्कां प्रपञ्चसत्येव कथं मुक्तात्मनां अपुरुषार्थस्य तस्य दर्शनं परिह्रियते इतिवाक्यनोद्भाव्य प्रपञ्चस्य सत्त्वेपि तस्य भूमशब्दार्थान्तर्भूततयैव दर्शनगोचरता भवति न तदन्यतयेति समर्थनेन तत्परिहारो दर्शितः। नहि मुक्तात्मनां प्राकृतप्रपञ्चो दर्शनविषयः किन्तु निरतिशयानन्दस्वरूपम् ब्रह्मैव प्रपञ्चाकारेण दर्शनगोचरो भवतीति तदनन्तरं भूमशब्दसमानार्थब्रह्मशब्दार्था-

न्तर्भावेनैव प्रपञ्चस्य मुक्तंप्रति दर्शनविषयताभवतीति प्रतिपादयन्ती श्रुतिस्तत्र सम्मतित्वेनोदाहृता । तथाहिश्रुतिः 'एतत्ततोभवतिआकाशशरीरंब्रह्मेतिएतत्परिदृश्यमानंप्रपञ्चजातमु क्तं प्रति ततो मुक्त्यनन्तरं परमाकाशरूपशक्तिविशिष्टं ब्रह्म भवति तथाभूतब्रह्मात्मनैव दर्शनगोचरो भवतीत्ययमर्थः पूर्व्वप्रकृतोपन्यासपूर्व्वकमुत्तरभाष्येण दर्शितः । आप्नोति स्वाराज्यमाप्नोति मनसस्पतिमित्यादिना मुक्तात्माप्रकृतः तस्य वाक्पतिमित्यादिना स्वाधीना प्रकृतविशुद्धावागिन्द्रियादिसम्बन्ध उक्तः तस्य पुनस्तादृशस्य ततस्तादृशावस्थाप्राप्त्यनन्तरं तत्परिदृश्यमानं प्राकृतप्रपञ्चजातमाकाशशरीरं चिदम्बरप्रकाशशरीरं ब्रह्मैव भवतीति तात्पर्य्यरहस्यार्थ इति चतुर्थाध्यायेपि भावे जाग्रद्वदितिसूत्रभाष्ये । ननु यदि मुक्तस्य प्राकृतवस्तुदर्शित्वरूपं भोक्तृत्वम् तदा तस्यापुरुषार्थप्रपञ्चदर्शिनो न संसारदुःखानुषंगाभावसिद्धिरिति चेत् न । मुक्तस्यापुरुषार्थरूपेण प्रपञ्चदर्शनाभावात् मुक्ते न ब्रह्माकारं हि दृश्यते विश्वमेतत् इति शङ्कोत्तराभ्यां तदन्तरं तथाहि श्रूयत इत्यारभ्य एतत्ततोभवतीत्यादि श्रुत्युदाहरणेन तद्व्याख्यानेन चायमर्थः प्रपञ्चितः । सदादिशब्दानां शक्तिविशिष्टशिववाचकत्वमात्रेण कथं विशिष्टाद्वैतसिद्धिः तटस्थस्य प्रपञ्चस्य सद्भावादितिशङ्कायाः परिहारः समस्तजगदात्मकावितिसम्पातिश्लोकवाक्येन सूचितः । समस्तस्य जगतः शक्तिपरिणामत्वसमर्थनेन प्रकृत्यधिकरणादिषु कृतेन

स्पष्टीकृत एवं विशिष्टाद्वैत एव सर्वत्र प्रतिपाद्यमाने कः प्रसङ्गः शुद्धाद्वैताङ्गीकारशङ्कायाः । किंच निर्दोषकल्याणगुणविशिष्टं सप्रपञ्चब्रह्मणः स्वरूपं न तु निर्विशेषमिति व्यवस्थापनार्थतयैव न स्थानतोपीत्याद्यधिकरणद्वयं प्रवर्त्तितं तत्रैवमाद्यमधिकरणं ब्रह्मनिर्विशेषं सविशेषं वेति प्रथमं संशयः। तदर्थं यः पृथिव्यां तिष्ठन्नित्यादिश्रुतिप्रतिपन्नं ब्रह्मणः पृथिव्याद्यवस्थानतच्छरीरत्वं तन्नियन्तृत्वादिकमतात्विकं तात्विकं वेति संशयः तदर्थं तस्य तात्विकत्त्वे ब्रह्मणः तत्प्रयुक्तदोषाः प्रसज्येरन्नवेति संशयः एवं सेति पूर्वः पक्षः ब्रह्मणो वस्तुतः पृथिव्याद्यवस्थानतच्छरीरकत्वादिसद्भावे यथा जीवस्य जागरस्वप्नसुषुप्तिमूर्छामरणावस्थासु सूक्ष्मस्थूलशरीरावस्थितिनिबन्धनादोषाः तथा ब्रह्मणोपि स्युः । शरीरावस्थितेरविशेषात् देहयोगाद्वा सोपीति सूत्रे संसारदोषाणां शरीरसम्बन्धनिबन्धनत्त्वस्योक्तत्वात् मलमूत्रमांसपूयशोणितादिकर्दमितेषु शरीरेषु रौरवादिष्विवावस्था न स्यादतिहेयतायाः सर्वैरंगीकार्यत्वाच्च नच यथा राज्ञो विषये वसतां राजाज्ञया सुखदुःखभाक्त्वमस्तीति तस्मिन्वसतोपि राज्ञो न तद्भवति एवमिहापि स्यादितिवाच्यम् । नहि राजविषयवासमात्रं राजाज्ञानुवृत्तिप्रयुक्तदुःखभाक्त्वे निमित्तं किन्तु राजाज्ञाविषयत्त्वविशेषितं राजा न राजाज्ञाविषयः अतोयुक्तं राज्ञः स्वविषयवासित्वेपि स्वाज्ञानुवृत्तिप्रयुक्तदुःखास्पृशत्वं शरीरप्रयुक्तदुःखभाक्त्वे तु शरीरे वासमात्रं

निमित्तं अतोयथापूतिगन्धादिप्रयुक्तकारागृहप्रयुक्तदुःखभा-
क्त्वेकारागृहावस्थितिमात्रं निमित्तमिति तत्कारागृहे निक्षिप्त
स्यैव स्वेच्छया तन्नियंतृत्त्वेन तत्रावस्थितस्यापि भवति । एवं
देहप्रयुक्तं दुःखं देहबन्धस्यैव तत्र तन्नियन्तृतया स्थितस्यापि
भवेदेव नच दुःखस्य कर्माधीनत्वात्सत्यपि ब्रह्मणः शरीर-
निवासे कर्मरहितस्य तस्य शरीरवासप्रयुक्तं दुःखं न
भवेदिति वाच्यं कर्मण्यपि हि दुःखविशेषानुगुणादेव मनु-
ष्यपशुपक्षिसरीरसृपादिसम्बन्धमापद्य तदनुप्रविष्टं जीवं
दुःखं भोजयन्ति ईश्वरस्य विनापि चेत् कर्मभिस्तेन तेन
शरीरे शरीरित्वं स्यात् तदा कर्माभावोपन्यासेन किं समाहितं
भवेत् । न खलु राजापराधेन कारागृहे निबद्धस्य भवति
तद्गतदुर्गन्धादिप्रयुक्तं दुःखं तन्नियन्तृतया कारागृहमनु-
प्रविष्टस्याधिकारिपुरुषस्य राजापराधभावमात्रेण न भवतीति
वक्तुं शक्यं किंच ब्रह्मणः सर्वशरीरकत्त्वे विधिनिषेधवा-
क्यगतब्राह्मणादिशब्दविषयत्वस्याप्यवर्जनीयतया तस्य वि-
धिनिषेधोल्लङ्घनप्रयुक्तपापावश्यंभावेन कर्मवश्यतया दुःख-
भाक्त्वं स्यादेव अपहतपाप्मत्वादिश्रुतेर्ब्रह्मणः कर्मवश्यता न
प्रसज्यत इति चेत् किं सा श्रुतिर्ब्रह्मणः सर्वशरीरकत्वस्य
तात्त्विकत्वाभ्युपगमे ततस्समापततस्य विधिनिषेधवाक्यगत-
ब्राह्मणादिशब्दविषयत्वं कर्मवश्यतापादकं विरोद्धुमीक्षे अत-
स्तात्पर्यवद्विधिनिषेधवाक्यविरोधात् सा श्रुतिः प्रशंसार्थमर्थ-
वादमात्रंस्यादितितत्प्रामाण्यमिच्छता तन्निर्वाहार्थमपि पृथि-

व्याद्यवस्थानतच्छरीरकत्वादिकमतात्त्विकमन्तर्यामिब्राह्मण- वाक्यादपि प्रशंसार्थं कल्पितमित्येव समर्थनीयं एवं सत्य- स्थूलमनण्वह्रस्वमदीर्घमित्यादि ब्राह्मणवाक्यानां ततो यदु त्तरतरं तद्रूपमनामयमिति शरीरराहित्येनैव निर्दोषत्वं प्रतिपादयतः श्वेताश्वतरमन्त्रस्य च सामञ्जस्यं भवतितस्मा- द्ब्रह्मणः पृथिव्याद्यवस्थानतच्छरीरकत्वतन्नियन्तृत्वतन्नि- यमनोपयोगिसर्वज्ञत्वसर्वशक्तित्त्वादिकं सर्वं कल्पितमिति ब्रह्मनिर्विशेषं 'सत्यं ज्ञानमिति' श्रुतेश्चिन्मात्ररूपमेवा- भ्युपगन्तव्यमित्यत्र सिद्धान्तः स्वतोनिर्द्दोषस्य ब्रह्मणः पृथि- व्याद्यवस्थानतापि दोषा न प्रसज्यन्ते सर्वत्र हि श्रुतिषु स्मृतिषु च एवं आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो विपिपासः सत्यकामः सत्यसङ्कल्पः अनादिमव- लसंश्लेषप्रागभावात्स्वभावत अत्यन्तपरिशुद्धात्मा शिव इत्यभिधीयते । अस्ति कश्चिदपर्य्यन्तरमणीयगुणाश्रयः सर्व- लोकस्य निर्माता पशुपाशविलक्षण इत्येवमाद्यासु निरस्त- समस्तदोषकलङ्कं निरतिशयमङ्गलगुणास्पदं चेत्येवमुभय- लिङ्गब्रह्मप्रसिद्धं अतः शरीरसम्बन्धेन प्रसज्जतां पाप्मजरामर- णशोकादिदोषाणामभावस्य तत्तद्दोषपरिपन्थिसत्यसङ्कल्पत्वा- दिगुणजातस्य श्रवणान्न दोषापादनमिह प्रभवति तथापि जीववत्स्वतोपहतपाप्मत्वादिमुक्तस्यापि ब्रह्मणः शरीरसबन्धि- त्वावस्थाभेदात्तत्तच्छरीरसम्बन्धदशायां तत्प्रयुक्ता दोषाः स्यु- रितिचेत् न ।

तत्परिहारार्थमेवान्तर्यामिब्रह्मणो यः पृथिव्यां तिष्ठन्नित्यादिपर्यायेषु प्रतिपर्याय एव आत्मान्तर्याम्यमृत इत्यमृतशब्देन दोषाभावप्रतिपादनात् अथर्वशिरसि च 'सोन्तरादन्तरं प्राविशदिति' शिवस्यान्तर्यामिभावेन सर्वानुप्रवेशवर्णनानन्तरं तत्प्रयुक्तसार्वात्म्यावलम्बनेषु देवकृतशिवस्तुतिमन्त्रेषु यो वै रुद्रस्स भगवान् यश्च ब्रह्मातस्मै वै नमो नमः । यश्च विष्णुर्यश्च महेश्वर' इत्यादिषु प्रतिपर्यायं तत्तच्छरीरसम्बन्धप्रयुक्तदोषपरिहारार्थमेतद्विरोधिनः समग्रैश्वर्यादिगुणजातस्य भगवच्छब्देन प्रतिपादनाच्च 'द्वासुपर्णासयुजासखायेति' मन्त्रे जीवब्रह्मणोरेकशरीरसम्बन्धे सत्यपि तत्प्रयुक्तफलभाक्त्वाभोक्तृत्वविशेषस्य प्रतिपादनाच्च । तथाप्यरूपत्वादिवाक्यैरापतन्निर्विशेषत्वं कथं वारणीयमितिचेत् इत्थं श्रुत्योर्विरोधे सति नैकस्याः श्रुतेरतात्त्विकविषयकल्पनेन अर्थापलापो न्याय्यः किंतु तुल्यं च सांप्रदायिकमिति न्यायादुभयोरपि तात्त्विकविषयसमर्पणेन अनुग्रहो न्याय्यः तथा च ब्रह्मणः शरीरसम्बन्धप्रतिपादकैरेव श्रुतिवाक्यैस्तस्य तत्प्रयुक्तदोषसम्बन्धप्रतिपादनात् 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मेति श्रुतौ परमाकाशस्य नामरूपपरिणामितया तादात्म्येन तन्निर्वोढत्वप्रतिपादनानन्तरं ब्रह्मणः प्रकृते न नामरूपे प्रत्यात्मकत्वमुक्त्वापि ते यदन्तरेति तदस्पर्शप्रतिपादनस्याकाशवद्ब्रह्मणस्ताभ्यां तादात्म्यं नास्ति किंतु शरीर शरीरिभावमात्रमिति

प्रतिपादनद्वारा तादात्म्येहि तदीयदोषाणां प्रसक्तिः शंक्ये
तापि नत्वेतदस्ति शरीरदोषाणां तु नात्मनि प्रसक्तिरस्ती-
त्यस्यार्थस्य विभावनाच्च तदनुसारेणारूपत्वश्रुतीनां अरूप-
तुल्यं ब्रह्म यथाखल्वशरीरमाकाशादिकं शरीरावस्थितिप्र-
युक्तदोषैर्न स्पृश्यते एवं ब्रह्मापीत्येवंपरतयायोजनं युक्तं नच-
कारागृहप्रविष्टनियंतृपुरुषदृष्टांतेन ब्रह्मणो नियंतृतयापि श-
रीरेष्ववस्थाने तत्प्रयुक्तंदुःखादिकमवश्यंभवेदितिन्यायानुगृ-
हीतानामरूपश्रुतीनां प्राबल्यात्तद्विरोधेनरूपवत्वश्रुतयएव
यथाकथं चिन्नेतव्या इतिशंकनीयं यतः कर्माधीनमेवार्थानां
दुःखजनकत्वं नवस्तुस्वभावप्रयुक्तं पुत्रदारादीनां शीतोष्णा-
दीनां च समय भेदेन मलमूत्रादीनां जाति भेदेन च
सुखदुःखकरत्वदर्शनात् 'तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते
तदेव कोपाय यतः प्रसादायच जायते तस्माद्दुःखात्मकं
नास्ति न च किंचित्सुखात्मक'मितिस्मरणाच्च। यत्तुपरमेश्वरस्य
सर्वशरीरकत्वे विधिनिषेधवाक्यगतब्राह्मणदिशब्दानां तात्प-
र्य्ये तत्वेन तस्यापि विधिनिषेधोल्लङ्घनप्रयुक्तपापस्यावश्यम्भा
वितयातत्कृतदुःखभाक्त्वंस्यादिति तत्तुच्छं लोकवेदसाधार-
णप्रसिद्धिवाहुल्यात् ब्राह्मणादिशब्दैःप्रथमोपास्थितानांतत्तच्छ-
रीराभिमानिजीवानामन्वयेन झटिति वाक्यार्थबोधनिः पत्तौ
सत्यां तावतैव वाक्यप्रामाण्यस्य चरितार्थतयेश्वरस्य सर्वा-
न्तर्य्यामित्वमन्तर्यामिणं प्रतिनियम्यानां शरीरत्वं शरीरवा-
चिशब्दानां शरीरिपर्य्यन्तत्वं च श्रुतिन्यायाभ्यामवगन्तव्यं

२

अपेक्ष्यविलम्बोपस्थितिकस्य तेस्यश्वरस्यान्वयेन पुनर्वाक्या-
र्थबोधान्तरानुदयात् अतएव त्रिःप्रथमामन्वाह त्रिरुत्तमामि
त्यत्रप्रथमोत्तमाशब्दाभ्यां शीघ्रोपस्थितिकयोः प्रथमचरम-
स्थानयोरेव वाक्यार्थान्वयो नतु प्रथमचरमस्थानानुवचनी
ययोः प्रवोवाजीयातु होतादिऋचोर्विलम्बितोपस्थितिकयो
रितीष्यते सत्यज्ञानादिवाक्येनापि ब्रह्मणो न ज्ञानमात्ररू
पत्वसिद्धिः तद्वाक्यावैयर्थ्यहेतोर्ज्ञानरूपत्वस्येव 'यस्सर्वज्ञ
सर्ववित्सर्वेश्वरश्च शम्भुराकाशमध्य' इत्यादिवाक्यावैयर्थ्यहे
तोस्सर्वज्ञत्वादिविशेषस्याप्यङ्गीकरणीयत्वात् द्विविधयोरपि
वाक्ययोः श्रुतित्वाविशेषात् ज्ञानरूपत्वविशेषांतरावन्वयो
र्विरोधाभावेनात्र व्यवस्थापकन्यायानपेक्षणाच्च । यदिसत्यज्ञा
नादिवाक्यं ज्ञानमात्ररूपं ब्रह्मेति ब्रूयात् तदा खलु विरोधः
स्यात् नत्त्वेवमाह किंतु ज्ञानरूपे ब्रह्मेत्येतावन्मात्रमाह न त
श्रुत्यन्तरप्राप्तविशेष्यत्वेन नविरुध्यते नहि सुवर्णमयं किरी
मिति वाक्यप्राप्तं सुर्वणरूपत्वं प्रत्यक्षादिप्राप्तेनोपरिप्रत्युप्त
रत्नवत्वेन विरूध्यते किंच अत्यल्पमिदमुक्तं कतिचिद्वेदा
न्तेषुब्रह्मणि प्रवृत्तः शब्दोस्ति यः प्रवृतिवाक्यानि ब्रह्मण
सर्वज्ञत्वादिविशेषान् बोधयतीति कृत्स्नोपि ब्रह्मपरो वेदा
न्तराशिस्तस्य विशेषवत्तांदर्शयति नहि तादृशः कश्चिद्वे
दान्तेषु ब्रह्मणि प्रवृत्तः शब्दोस्ति यः प्रवृत्तिनिमित्ततया
कस्यचिद्दोषस्याभावं कञ्चन कल्यागुणं वा न समर्पयेत्
वेदान्तोपबृंहणप्रवृत्तैर्मुनिभिरप्युभयलिङ्गब्रह्मसमर्थ्यते इति प्र

सिद्धमेव न केवलमुभयलिङ्गत्वश्रुतिस्मृतिवलाद्ब्रह्मणः पृथिव्यादिस्थितावपि तत्प्रयुक्तदोषाप्रसङ्गः किंतु श्रुत्युदाहृतदृष्टान्तसामर्थ्येनापि एवं हि दृष्टान्तमुदाहरति श्रुतिः 'आकाशमेकंहि यथा पटादिषु पृथग्गे तत्तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमानि' ति अत्राद्यदृष्टान्तेन यः पृथिव्यां तिष्ठन्नित्यादिश्रुतिसिद्धा सर्वत्र स्थितिरुपपादिता तेन कथमेकस्यामूर्त्तस्य बहुषु स्थितिः कृत्स्नैकदेशवृतिविकल्पपराहतत्वादिति शंका निवारिता द्वितीयदृष्टान्तेन च तेषु स्थितस्यापि तेष्वस्थितस्येव तत्प्रयुक्तदोषास्पर्श उपपादितः तेन तच्छरीरः कथं तत्प्रयुक्तदोषवान्न भवेदिति शङ्का निवारिता कर्मवश्यत्त्वतदभावाभ्यां विशेष इति श्रुतेरभिप्रायः नचेदमाशंकनीयं अम्बुनि सूर्यस्तत्रानवस्थितएव तत्र स्थितइव गृह्यते तथा परमात्मनो वस्तुतः पृथिव्यादावस्थितस्य स्थितत्त्वेनाग्रहणात् । वस्तुतः पृथिव्यादौ स्थित इत्येवाभ्युपगमात् न ब्रह्मणः सूर्यस्येवोपाधिप्रयुक्तदोषास्पृष्टत्त्वमुपपद्यत इति यथा जलसूर्य्यस्य जलोपाधिप्रयुक्तवृद्धिह्रासादिभाक्त्वं वस्तुतो न भवति एवं ब्रह्मणः पृथिव्याद्यंतरवस्थितिप्रयुक्तं गुणदोषभाक्त्वं न भवतीति तत्प्रयुक्तगुणदोषभाक्त्वाभावमात्रे दृष्टांतोयं 'जलाधारेष्विवांशुमानिति' दृष्टान्तद्वयग्रहणसामञ्जस्यादेवमवगम्यते सूर्यस्याम्बुनीव ब्रह्मणः पृथिव्यादिष्वनवस्थितिपर्य्यंतविवक्षायां हि प्रथमश्रुत दृष्टान्तोपमर्द्दः स्यात् नच सर्वात्मना दृष्टान्तदार्ष्टान्तिकयोः

साम्येन भव्यमित्यनियमः लोकवेदयोर्विवक्षितांशसाम्यमात्रेण दृष्टांतीकरणदर्शनादिति इत्थं न स्थानत इत्यादिभिर्दशभिः सूत्रैर्ब्रह्म अविशेषं निर्द्दोषकल्याणगुणास्पदमिति समर्थनार्थमेकमधिकरणं कृतं तदनंतरं तदेवाक्षेपसमाधानाभ्यां द्रढीकर्त्तुंप्रकृतैतावत्त्वंहि प्रतिषेधति ततो ब्रवीति च भूयइत्यादिभिर्नवभिः सूत्रैरधिकरणान्तरं कृतं तत्र पूर्वाधिकरण समर्थितं ब्रह्मणउभयालिङ्गत्वमुपपद्यते नवेति संशयः तदर्थं वृहदारण्यके द्वेवाव ब्रह्मणो रूपे मूर्त्तं चैवामूर्त्तं चेत्यादिना ब्रह्मणः पृथिव्यप्तेजोवाय्वाकाशरूपमूर्त्तामूर्त्तप्रपञ्चात्मकं रूपमुक्त्वा अथात आदशो नेतिनेतीति क्रियमाणो निषेधः प्रकृतमूर्त्तामूर्त्त ब्रह्मरूपविषयः यद्ब्रह्मणोमूर्त्तामूर्त्तप्रपञ्चात्मकं रूपमुक्तं तद्वस्तुतो नास्तीति ।

अथवा ब्रह्मणः प्रकृतमूर्त्तामूर्त्तप्रपञ्चात्मकरूपवत्त्वमेव न भवति अधिकमपि गुणजातमस्तीत्येवं प्रकृतैयत्ताविषय इति संशयः तत्र पूर्वः पक्षः नेतिनेतित्यत्रेति शब्दपरामृष्टस्य नञा निषेध इति तावन्निर्विवादं इति शब्दः प्रकारवाची पूर्वप्रकृतं प्रकारं परामृशेत् पूर्वं च मूर्त्तामूर्त्तप्रपञ्चात्मकं ब्रह्मणः प्रकारद्वयं प्रकृतं अतस्तन्निषिध्यत इति युक्तं नेतिनेतीति बीप्सायां द्विरुक्तिः पूर्वप्रकृतस्य रुपद्वयस्य साकल्येन निषेधप्रत्यायनार्थाचैकेन मूर्त्तस्यान्येनामूर्त्तस्य च प्रपञ्चस्य निषेधइति अथवैकेनमूर्त्तस्यान्येनामूर्त्तस्य च प्रपञ्चस्य निषेध इति द्विरुक्तिसाफल्यं प्रकृतैयत्तानिषिध्यत इति न

युक्तं रूपद्वयवत्तस्याः प्रकृतत्त्वाभावात् रूपद्वयनिषेध इव तन्निषेधे द्विरुक्तिसाफल्याभावाच्चेति सिद्धान्तस्तु प्रमाणान्तराप्रतिपन्नतया पूर्ववाक्ये श्रुत्यैवविहितं ब्रह्मणो मूर्त्तामूर्त्तरूपवैशिष्ट्यं तदनन्तरवाक्येन निषेद्धुं न शक्यते पूर्वापरविरोधापत्तेः षोडशिग्रहाग्रहवत् वस्तुनि विकल्पायोगात् अतः पूर्वं मूर्त्तामूर्त्तरूपवैशिष्ट्योक्त्या बुद्धिस्थः प्रकृतिरूपैतावत्त्वात्मकः प्रकारो निषिध्यत इति युक्तं यतस्तदनन्तरमेव नह्येतस्मादिति नेत्यन्यत्परमस्त्यथनामधेयं सत्यस्यसत्यमिति 'प्राणावै सत्यं तेषामेष सत्य' इति वाक्यशेषो भूयो गुणजातं ब्रवीति अत्र प्रथमवाक्ये न इति नेति प्रकृतैयत्तानिषेधगोचरत्त्वेनोक्तादेतस्माद्ब्रह्मणः परमुत्कृष्टमन्यन्नास्तीति स्वाधिकराहित्यं गुणउच्यते अथ नामधेयमित्यादिवाक्येन ब्रह्मण उत्कृष्टाभावेपि मूर्त्तामूर्त्तप्रपञ्चशरीरकत्त्वेन तदुभयनियन्तुस्त स्यसमाः संत्येव अस्ति हिभूतवशिनां योगसिद्धानां मुक्तानां च ब्रह्मवदेव तदुभयशरीरकत्त्वेन तन्नियन्तृत्त्वमिति शङ्कानिरासार्थं 'ब्रह्मणः सत्यस्य सत्यमिति' नामविधानपूर्वकं तन्निर्वचनं क्रियते तत्र प्राणशब्देन प्रणाधिष्ठातारो जीवा लक्ष्यंते ते तावत्सत्यभूता अविकारावियदादिवत्स्वरूपान्यथाभावरूपोत्पत्त्यभावात् तेषामप्युत्कृष्टं सत्यं ब्रह्मजीववद्ज्ञानसंकोचविकासात्मिकाया अप्युत्पत्तेरभावात् अतो योगिनां मुक्तानां च ज्ञानविकासानन्तरं तात्कालिकप्रपञ्चनियन्तृत्वसद्भावेपि प्राक् ज्ञानसंकोचकाले तन्नास्ति अतस्सा-

वैदिकसर्वप्रपञ्चनियन्तृब्रह्मैवेति न तत्समः कोपि जीवोस्तीत्यभिप्रायः ।

यद्वा कृत्स्नेनापि वाक्यशेषेण समराहित्यमेवबोध्यते अधिकराहित्यं तु कैमुतिकन्यायेन सिद्ध्यति अस्मिन्पक्षे प्रथमवाक्यस्यैवं योजना इति नेति निषेध्येयत्ताप्रतियोगिभूतात् मूर्त्तामूर्त्तप्रपञ्चात् परममुत्कृष्टं ब्रह्मैव ततोऽन्यन्नियन्तृतया अस्मात्प्रपञ्चादुत्कृष्टं नास्तीति यद्वा इति नेति प्रकृतेयत्तानिषेधगोचरादेतस्माद्ब्रह्मणोन्यत्परं नियन्तृत्वेन प्रपञ्चादुत्कृष्टं नास्तीति योजनाअस्मिन्योजनाद्वये नान्यत्पदवैयर्थ्यसङ्केति विशेषः । नन्वयं वाक्यशेषः प्रकृतरूपद्वयनिषेधपक्षेपि सङ्गच्छते कथं इति नेति निषिद्धरूपद्वयादेतस्माद्ब्रह्मणोऽन्यदन्यथाप्रतिभासमानं परं नास्ति वस्तुतो व्यतिरिक्तं नास्तीत्याद्यवाक्यस्यार्थः । तद्दृढीकरणार्थं द्वितीयं वाक्यं न च प्राणशब्देनेंद्रियवाचिना तद्विषया लक्ष्यंते ते सन्मृत्पिन्डः सन्घटः सत्कपालं सच्चूर्णमित्त्यादिप्रत्ययविषया मृत्पिण्डघटकपालादयोव्यावर्त्तमानसत्याः ब्रह्म तु सर्वेष्वप्येतेषु प्रत्ययेषु सत्सदितिप्रत्ययत्रेय्यमनुगतं सत्यं व्यावर्त्तमानाश्चानुवर्त्तमाने कल्पिताद्दष्टाः यथाराज्विदमंशेषुकुसर्प्पभूदलनादयः अतोव्यावर्त्तमाना घटादयः केवलं प्रतिभासतस्सत्याइति तेषामुत्कृष्टसत्यं पारमार्थिकं ब्रह्मेति तस्यार्थः एवं इति शब्दस्यप्रकृतरूपद्वयपरामार्शित्वस्वारस्यानुसारेण वाक्यशेषस्यार्थे वर्णयितुं शक्ये नान्यथार्थवर्णनं युक्तमितिचेत् । स्यादेवं यदि रज्जोरिदमा-

कारेणेव ब्रह्मणः सद्रूपेण प्रत्यक्षविषयत्वमुपपद्येत नतु तदुपपद्यते 'न सदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैवं' इत्यादि श्रुतिर्हि ब्रह्माव्यक्तं प्रत्यक्षाद्यगोचरमाह ब्रह्मस्वरूपं तु संराधने सम्यग्दृढभक्तिपूर्वकं ध्यानयज्ञेनाराधनेसति प्रसन्नं सत्स्वात्मानं संराधकाय प्रकाशयति तदिदं 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्माविवृणुते तनुं स्वां अयं तु परया भक्त्या दृश्यते नान्यथा क्वचित् हरिश्चाहंच रुद्रश्च तथान्ये च सुरासुराः। तपोभिरुग्रैरद्यापि तस्य दर्शनकांक्षिणः इत्यादि' श्रुतिस्मृतिभ्यामवगम्यते एवं संराधनं ब्रह्मसाक्षात्कारस्य कारणमुक्तं तत्कार्य्यं तत्ज्ञानानंदादिवत् जगदैश्वर्यस्याप्यवैशेष्यं यथा तेषां ज्ञानानंदादेः ब्रह्मज्ञानानंदादितो विशेषाभावः तथा तेषां जगदैश्वर्यस्यापि ब्रह्मणो जगदैश्वेर्याद्विशेषाभावो भवति अतएव भगवतः कृष्णस्यो पासना कर्मण्यभ्यासात् चिरनिरंतरैकाग्र्यात् ब्रह्मसाक्षात्कारेण तद्वज्जगदैश्वर्य्यप्राप्त्या अर्जुनाय तत्प्रकाशनं गीतासु दृश्यते अगस्तिविश्वामित्रादीनां च जलधिपानस्वर्गांतरकरणादिसामर्थ्यप्रकाशनं पुराणेषु दृश्यते नचैतदसंभावितं लोकेपिहि गरुडमंत्रोपासकानां गरुडभावनायां तदसाधारणस्य दर्शनमात्रेण विषसंहरणसामर्थ्यरूपस्य कियतो धर्मस्य प्राप्तिर्दृश्यते तथा ब्रह्मभावनयापि ब्रह्मासाधारणकियद्धर्मप्राप्ति युक्तैव एवं ब्रह्मज्ञानस्य संरा-

धनं कारणं तदैश्वर्य्यादिप्राप्तिः कार्य्यमितिस्थिते सन्घट इत्यादि प्रत्यक्ष क्लृप्ततत्कार्यकारणयोरदर्शनात् इतोपिहेतो-र्नेतिनेतीत्यत्र प्रकृतेयत्तानिषेधः नतु प्रकृतरूपद्वयनिषेध इत्य-प्यवगम्यते कथं ब्रह्मसाक्षात्कारवतां यदैश्वर्यमाविर्भवति त द्ब्रह्मसाम्यरूपमिति वक्तव्यं 'निरंजनः परमं साम्य मुपैती' तिश्रुतेः अतो यथा तेषा माविर्भवद्धनानंदरूपत्वं ब्रह्मणः स्वीक्रियते एवं जगदैश्वर्यमपि तस्यांगीकर्त्तव्यं अन्यथा-परमसाम्यासिद्धेः सर्वै रपिगुणैः किंचि त्किंचित्साम्यंहि परमसाम्यं भवति नतु येन केनचिद्रूपेण किंचि त्साम्यमात्रं तस्माद्ब्रह्मणोपासीनानामपि तदसाधारणज्ञानानैंदैश्वर्याद्य-नंतकल्याणगुणाविर्भावदर्शनात् अनंतेन कल्याणगुणेन ब्रह्मणो योगेन विबादावकाशः तस्मा दुभयलिंगमेव ब्रह्म ननु द्वेवावब्रह्मणो रूपे इत्यादिनोक्तं प्रपञ्चस्य ब्रह्मरूपत्वं ब्रह्म-प्रपञ्चयो राध्यासिकसम्बन्धेन निर्वाह्यं विधांतरेण तन्नि-र्वाहासम्भवात् ततश्चनेति नेतीत्यध्यस्तप्रपञ्चनिषेध इत्येव युक्तमिति चेन्न आध्यासिकसम्बन्धं विना प्रकारांतरेण प्रपञ्चस्य ब्रह्मरूपत्वनिर्वाहसम्भवात् तथाहि रूपशब्दोत्र स्वरूपपरः न धर्मपरः ततश्च एक एव रुद्रः 'सर्वो वै रुद्रः' इत्येकत्त्वबहुत्वव्यपदेशात् अहेरेकस्य कुण्डलभावऋजुभावव-भावाद्यनेकसंस्थानविशेषवद्ब्रह्मण एव द्वेवावब्रह्मणो रूपे इत्यादिनाक्तः पृथिव्यदिरूपो ऽनेकः संस्थानविशेष इत्युप-पद्यते अथ वा ब्रह्मप्रञ्चयोर्भेद एवास्तु तथापि ब्रह्मणो रूपे

इति ब्रह्मस्वरूपतोक्तिरुपपद्यते'सर्वं खल्विदं ब्रह्मेति' श्रुतेः सर्वस्यापि ब्रह्मत्वरूपैकजातियोगादृदृश्यते हि प्रभाप्रभावतो भेदेपि तेजस्त्वरूपकैजातियोगात्सर्वमिदं तेजः स्वरूपमिति व्यवहारःअथवामाभूदिदंपक्षद्वयं आद्यपक्षेहिब्रह्मणः परिणामित्वं जडत्वंचेति दोषद्वयं स्यात् द्वितीयपक्षेपि तत्स्यात् ब्रह्मत्व जात्याश्रयत्वेन प्रपञ्चोपि ब्रह्मेत्यभ्युपगमात् तथाच पक्षद्वयेपि ब्रह्मनिर्दोषत्वप्रतिपादकसकलश्रुतिविरोधो भवेदतः पूर्ववदेवात्रापि उपपादनीयं पूर्वत्र'ह्यंशोनानाव्यापदेशादित्यधिकरणे' प्रभाजातिगुणशरीरवदपृथक्सिद्धविशेषणतैकस्वभावतया विशिष्टैकदेशत्वेनब्रह्मांशत्वमुक्तं चेतनवर्गस्य एवमचेतनवर्गस्याप्यस्तु तदेव ब्रह्मणो रूपमित्यनेनोच्यत इति न कश्चिद्दोषः एवं च 'यस्य पृथिवी शरीर' मित्यादि श्रुत्या विद्याऽविद्यात्मकं सर्वं विश्वं विश्वगुरो र्विभोः रूपमेव न संदेहो विश्वं तस्यवशेयतः ' इत्यादिपुराणवचनैश्च चिदचिद्वस्तुनोर्ब्रह्मशरीरत्वोक्तिरप्येतदेकार्था भवति 'नास्य जरयैतज्जीर्यति अस्थूलमनण्वह्रस्वमित्यादि ' श्रुतिषु ब्रह्मणो जरादिप्रतिषेधादपि प्रपञ्चशरीरकत्वमनुमतमवसीयते तस्मिन्सत्येवहि ब्रह्मणस्तत्प्रयुक्तदोषप्रसक्तौ तत्प्रतिषेधश्रवणमुपपद्यते तस्मान्निर्दोषं सगुणं सप्रपञ्चं ब्रह्मेत्येवमधिकरणद्वयेन ब्रह्मणस्सगुणसप्रपञ्चत्वव्यवस्थापनानन्तरं एवंभूताद्ब्रह्मणः परमुत्कृष्टन्तत्त्वान्तरं नास्तीति 'परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्य' इत्यधिकरणेन पूर्वोत्तरपक्षाभ्यां समर्थितं अपिच

शिवस्य गुणविग्रहादिकं सत्यं नित्यं च न तु कल्पितमनि-
त्यंचेति निर्णयार्थं तृतीयाध्यायएवादरादलोपइत्यधिकरणं
कृतं तदित्थंशिवस्यनीलकंठत्वादिविशिष्टोविग्रहः सत्यसंकल्प
त्वादिगुणगणश्च कदाचिल्लुप्यते नवेति कल्पितत्वाकल्पित-
त्वाभ्यां संशये पूर्वपक्षः आनंदरूपः शिवस्य विग्रहइत्याकाशश-
रीरं ब्रह्म'आनंदरूपममृतं यद्विभातीत्यादि'श्रुत्यनुसारादिष्य-
नचानन्दस्य वक्षःकंण्ठहस्तांगुल्यादिरूपेण स्थौल्यकार्श्ये संभ-
वतः तत्संभवांगीकारे तैत्तिरीयोपनिषद्यानंदमयस्य ब्रह्मण
तस्य प्रियमेवशिरः मोदोदक्षिणः पक्षः प्रमोदउत्तरः पक्ष
आनन्द आत्मा ब्रह्मपुच्छं प्रतिष्ठेत्याम्नातं प्रियशिरस्त्वादि-
कमपि तात्विकंस्यात् तथासति प्रियशिरस्त्वाद्यप्राप्तिरुपच-
यापचयौ हि भेदइति प्राक्सूचितं विरुद्ध्येत अतो विग्रह-
स्तावत्कल्पितः तत्सहपाठान्निर्गुणश्रुतिविरोधाच्च गुणग-
श्चकल्पित इतिसिद्धांतस्तु नीलकण्ठत्वोमापतित्वसत्यसं-
ल्पत्वादीनमभ्यासेनादरावगमात् विग्रहगुणगणयोस्तात्वि-
कत्वमवसीयते श्रुतिशरणैः खलु यथा श्रुत्यैवाभ्युपगंतव्यं श्रु-
प्रामाण्यादानंदात्मनैव परमाकाशस्योपचयापचयात्परिणाम-
युज्यते प्रियशिरस्त्वादिकंतु तथा तात्पर्यग्राहकप्रमाणाभा-
वादन्नमयादिषु कल्पितैः पक्षपुच्छादिभिः सहपाठाच्च कल्पि-
तमित्यभ्युपगम्यते इह तथा तात्पर्य्यग्राहकोभ्यास इति चेत्
उच्यते सवितृमंडलविद्यायां 'नमोहिरण्यबाहवे हिरण्यपत-
विकापतये उमापतय इति' उमापतित्वस्य शब्दभेदेनाभ्यास

श्रीरुद्रोपनिषदि ' नमो नीलग्रीवाय च शितिकंठाय चेति' नीलकंठत्वस्य तथाभ्यासः दहरविद्यायां कैवल्योपनिषद्यु-मासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकंठं प्रशान्तमिति समाम्नातयोरुमासहायत्वत्रिलोचनत्वयोस्तस्यामेव दहरवि-द्यायां तैत्तिरीयोपनिषदि पुरुषं कृष्णपिंगलं ऊर्ध्वरेतं विरू-पाक्षमिति कृष्णपिंगलविरूपाक्षशब्दाभ्यां अभ्यासः एवं दहर विद्यादिष्वाम्नातानां सत्यसंकल्पत्वादीनां शांडिल्यविद्यादिषु पुनराम्नानमभ्यासः ननु शाखाभेदे विद्याभेदेच पुनराम्नानं कथमभ्यासः शाखाभेदे हि तत्तदध्येतृप्रातिपत्त्यर्थं पुनराम्नानं विद्याभेदे पुनर्वचनं तत्तद्गुणप्राप्त्यर्थं विद्यांतरगुणानां विद्यान्तरे उपसंहारतः प्राप्त्यभावात् शाखैक्ये विद्यैक्येपि केषांचिद् गुणानां पुनर्वचनं परस्परानाम्नातगुणोपसंहारोप-युक्तविद्यैक्यसिद्धिहेतुप्रत्यभिज्ञानार्थं एवं प्रयोजनान्तरा-र्थानि पुनराम्नानानि न तात्पर्य्यग्राहकाभ्यासरूपतां भंजत इति चेत् उच्यते । 'आनन्दमयः प्रधानस्येत्यधिकरणे' तावदयमर्थः स्थितः सत्यज्ञानानन्दादयो गुणा नीलकंठ त्वोमासहायत्वादिविशिष्टः परमानन्दात्मको विग्रहविशेष इत्येते सर्वे परब्रह्मणः शिवस्य स्वरूपलक्षणांतर्गतत्वात् सर्वासु परविद्यासूपसंहार्याः तेषां ब्रह्मविद्यादिसकलेतरविलक्षणत्वेना नुभवात् रुढया तत्प्रातिपत्तावपेक्षितत्वादिति तदनन्तरप्रवृत्ते प्रियाशिरस्त्वाद्यधिकरणे च ये सत्यसंकल्पत्वादयो मुक्तप्राप्या गु-णास्तेपि सर्वासु परविद्यासु यथोपासनंफलमिति न्यायेनापेक्षि

तत्वादुपसंहार्या इति निरूपितं तत्रोभयत्राप्यपेक्षितत्वमेव विद्
भेदेप्युपसंहारे मूलभूतोन्याय इत्यनेनैवन्यायेन यज्ञादीनां शम
दीनांउद्धूलनत्रिपुड्रयोर्विद्यानामावृत्तराप्रायणंतदनुष्ठानस्यपू
त्तरपापविनाशाश्लेषयोरर्चिरादिपर्वविशेषाणां चेत्येवमादीन
कासुचिदेव विद्यासु श्रुतानामपि सर्वासु परविद्यास्त्रापतंत
प्रासिस्तत्रतत्र सम्भावितशंकाविशेषनिराकरणपूर्वकं सर्वाप
क्षाधिकरणादिषु समर्थिता एवं च सत्यसंकल्पत्वादिगुण
नामेकत्राम्नानेपि सर्वासु परविद्यासु सम्भवत्प्राप्तिकानां वि
द्यांतरेषु पुनराम्नानमनन्यप्रयाजनत्वात्तात्पर्य्यग्राहकाभ्यास
रूपतयैवावतिष्ठते तस्मादभ्यासेनादरावगमादलोपो विग्रहगु
णगणयोः निर्गुणश्रुत्यादिकं तु सगुणश्रुत्यादिविषयपरिह
रेण हेयगुणादिराहित्यविषयतयावतिष्टते 'यदाहनीयन्याये
श्रुतिद्वयप्रामाण्यलाभाय विषयव्यवस्थाकल्पनौचित्यादि
एवं नित्यगुणविग्रहविशिष्टं शिवरूपमेव ब्रह्म मुक्तप्राप्यं न
दुत्तीर्णं निर्विशेषं मुक्तप्राप्यं ब्रह्मास्तीति निर्णयार्थमुपस्थि
तेंतद्धनादिति तदनन्तराधिकरणं कृतं तदित्थं मुक्तप्राप
ब्रह्म शिवादन्य उत शिव एवेति संशयः तदर्थं मुक्तिर्निर्विशेष
ब्रह्मभावापत्तिरुत सविशेषब्रह्मसादृश्यापत्तिरिति संशयः त
पूर्वः पक्षः नीरूपं निर्विशेषं च परं ब्रह्मेति परः शत
श्रुतयः प्रतिपादयंति तद्भावापत्तिर्मुक्तिरिति च 'ब्रह्मैव स
न्ब्रह्माप्येति' 'सयोहवैतत्परं ब्रह्म वेद ब्रह्मैवभवतीति' सावधा
णा श्रुतिःप्रतिपादयाति अतोरूपवान्सगुणः शिवो न परं ब्रह्म

नापितत्साद्दश्यापत्तिः परममुक्तिरिति सिद्धान्तस्तु उक्तरूपः शिव एव परं ब्रह्म तत्साद्दश्यापत्तिरेव च परममुक्तिः दहरपुंडरीकादिषु तदुपासनेन तस्मिन्नुपस्थिते उपासकेन प्राप्ते सति अतस्तत्प्राप्त्यनन्तरभाविस्वरूपाभिनिःपत्तेरेव हेतोस्तस्य ईक्षणादि बिहारस्यैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिः पद्यते स उत्तमः पुरुषः स तत्र पर्य्येति 'ईक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वेति' श्रुतावुक्तत्वात् 'निरंजनः परमंसाम्यमुपैतीति' श्रुतौ निरंजनस्य ब्रह्मसाम्यापत्तिप्रतिपादनाच्च नहि परममुक्तेरन्यत्र स्वरूपाभिनिःपत्तिरंजनाख्यमलापगमोवास्ति रूपगुणनिषेधश्रुतयः शिवे परब्रह्मणि रूपगुणवत्येव हेयरूपगुणनिषेधपराः 'ब्रह्मैवसन् ब्रह्मैवभवतीति' श्रुत्योरेवकारः साम्यश्रुत्यनुसारादिवार्थः अंधोभवत्यपि रोदितीव 'विनाशमेवापीतोभवतीति, सुषुप्तविषयश्रुतौ एवकारस्येवार्थत्वदर्शनात् अथवा ज्ञानविकासेन वृहत्त्वं प्राप्नुवन्नेव ब्रह्म प्राप्नोति यः परं ब्रह्म वेद स स्वयमपि ज्ञानविकासेन वृहत्वशाल्येव भवतीति तत्रोक्तश्रुत्योरर्थ इति एवं सगुणं सविग्रहं सप्रपञ्चं च सविशेषमेव ब्रह्म नतु निर्विशेषमिति स्वयं वहुषु प्रदेशेषु व्यवस्थापनेन तदर्थं सूत्रारूढतयाऽनेकाधिकरणप्रवर्त्तनेन च विशिष्टाद्वैतमेव प्रयत्नेन परमसिद्धान्तं व्यवस्थापितवतां श्रीकंठशिवाचार्याणां मते कः शुद्धाद्वैतं परमसिद्धान्त इति कल्पनस्यावकाशः यत्व नियमाधिकरणादिषु

निरन्वयोपासकानामत्रैव मुक्तिरिति निर्गुणनिष्ठानामर्चिरा-
दिगत्यनपेक्षसूक्त्यभिधानं तत्केचिदाहुरित्युपक्रमात् मतां
तरोपन्यासपरमिति तत्र तत्र स्पष्टमेव यच्च 'शास्त्रदृष्ट्यात्
पदेशो वामदेववदित्यादि' सूत्रेषूपासकस्य शिवाभेदभावन
मुक्तिहेतुरिति प्रतिष्ठापनं तदारोपिताभेदभावनापरं अतए
प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासादिति प्रकृतैत
वत्वाधिकरणसुत्रभाष्ये 'दिव्यंददामि ते चक्षुः पश्य मे यो
मैश्वरमि' त्यादिषु हि कृष्णादीनां तदैक्यभावनया तदैश्वर्य
प्रकाशनं दृश्यते ब्रह्मभावनाभ्यासेनच विश्वामित्रागस्त्यादी
स्वर्गांतरकरणजलनिधिकवलनादिसामर्थ्यं लोके च मंत्रप
गरुडभावनया गरुडासाधारणधर्मप्राप्तिरित्यारोपितविषय
रुडैक्यभावनादृष्टान्तेन शिवैक्यभावनायाआरोपितविषय-
माविःकृतं सुदर्शनाचार्य्यैरपि तात्पर्यसंग्रहे गरुडैक्यभा
नादृष्टान्त एवोपात्तः ब्रह्मोच्यते परमसौपरमं च तत्त्वं ज्यो
परंच परमश्वेरपद्मनाभवद्भावनैकरसिकस्त्वदनन्यभावान्म
यथा गरुडभावनया गरुत्मान् इति तदनुवर्त्तिनां श्री
ठाचार्य्याणामपि तथैव मतमिति युक्तं ननु यदिभाष्यक
राणां विशिष्टाद्वैते दृष्टिः जीवब्रह्मभेदेन तदा सन्घटः सन्
इति सर्ववस्तुष्वनुस्यूततया सद्रूपस्य ब्रह्मणः सर्वोपादान
सिद्ध्यति मृदुपरक्तं हि घटादिकं मृदुपादानकमिष्यते इ
जन्माद्यधिकरणे मृदयंघटइत्यत्र यथा मृद्व्याप्तिर्घटे दृश्य
तथा ब्रह्मेदं जगदिति ब्रह्मव्याप्तिर्न दृश्यते इति चेत् सन्घ

सन्पट इति सर्वत्र दृश्यत एव सद्रूपस्य ब्रह्मणोऽव्याप्तिरि-त्यारंभणाधिकरणे च सन्घटइत्यादि प्रत्यक्षस्य सद्रूपब्रह्म-विषयत्वं यदुक्तं तन्न घटते इदं हि बचनं अनुवर्त्तमाने सद्रूपे ब्रह्मणि व्यावर्त्तमानं घटपटादिकं कल्पितं रज्ज्विदमं-शेन इवसर्पादिकामिति प्रपञ्चमिथ्यात्त्वयुक्तेरवकाशप्रदर्श-नार्थं नच ब्रह्मण उपादानत्त्वोपपादनार्थमिदं वचनं कंठत-स्तथैवोक्तत्त्वादिति शंक्यं ब्रह्मणः कार्य्याभिन्नपरिणाम्यु-पादानत्वमभिमतं चेत् तदा खलु तदुपपादनार्थं मृद्घटः मृन्मणिक इत्यादिवत्कार्योपादानाभेदावगाहि प्रत्यक्षं उदाह-रणीयं नच तथाभूतं ब्रह्मणः प्रपञ्चोपादानत्वमाचार्या-णामभिमतं तस्य 'प्रकृत्यधिकरणे' निराकृतत्त्वात् अतो रज्जा वयं सर्प इदंभूदलनमित्यादि धीवत्कल्पिततादात्म्यावगा-हिप्रत्यक्षस्येदं व्याजांतरेणोदाहरणमित्येव युक्तं तथाऽत्र अ-धिकरणे यदा मंत्रपूर्वार्धव्याख्यानावसरे ननु नित्यप्रकाशे शिवे परब्रह्मणि सत्यपि कथं तमोमयंजगदिति चेत। न स्वयं प्रकाशस्य सर्वसाक्षिणः शिवस्य का हानिः नामरूपशुन्यतया ग्रहणायोग्येषु विषयेषु विहतकरणशरीरशक्तीनां जीवानां प्रप-ञ्चग्रहणं नास्ति मलतिरोहितस्वज्ञानतया शिवस्य स्वप्रकाश-रूपस्यापि पूर्वमिव दर्शनं नास्ति तस्मान्निरस्तसमस्तकार्य्य-विशेषतया परमसुषुप्तिमयी महावस्था तमइत्युच्यते इतिशं-कोत्तराभ्यां तमःशब्दं प्रत्ययकालप्रवृत्तजीवगताज्ञानपरं व्या-ख्याय प्रकृत्यधिकरणे तन्मंत्रोत्तरार्थव्याख्यानावसरे तत्का-

लतमोपनोदनी महास्फुरत्तारूपा परमा प्रज्ञा ज्ञानशक्ति
प्रसृतेति शिवचिच्छक्तेर्जीवगताज्ञानरूपपूर्वार्द्धोक्ततमोपनो
दकत्वं तदुपपादनार्थं महास्फुरत्तारूपेति सर्वजीवगतघटप
टादिस्फुरणरूपत्वं च यदुक्तं यच्चारंभणाधिकरणे सच्चिद्रूपेण
शिवेन यदि न व्याप्तं जगत् तदा सत्तास्फुर्त्तिभ्यां विना
कृतं कथमस्ति स्फुरतीति च दृश्यते अवस्त्वेव भवेदिति घटोम
स्फुरति पटो मम स्फुरतीत्यादि जीवधीष्वनुगम्यमानस
स्फुरणस्य ब्रह्मचिद्रूपत्त्वमाविःकृतं एषह्येवानंदयतीति जीव
त्मन्यानंदहेतुरानंदमयः श्रूयते स्वयं प्रचुरानंदोहि परानानंद
यतीत्या'नंदमयाधिकरणे' कोह्येवान्यात्कः प्राण्यात् यदेष आ
काशआनंदोन स्यात् एषह्येवानंदयति रसोवै सः रसंह्येवा
लब्ध्वानंदीभवतीति सर्वानुभवविषयत्त्वमस्याः श्रूयते तथा
'स एकोमानुष आनंद' इत्यारभ्य'स एको ब्रह्मण आनंद,इ
ब्रह्मपर्य्यंतमुपाधितिरोधानादानंदाविर्भावः तारतम्येन श्रू
तइत्यभाववादरित्यधिकरणे चाहंसुखीति जीवैरनुभूयमा
नस्य सुखस्य ब्रह्मानंदरूपपरमशक्त्यंशत्त्वमुक्तं इदमपि स
न घटते इदं हि जीवानां ब्रह्माभेदोपपादनार्थं भेदपक्षे त
दनुपपत्तेः अन्यज्ञानेनान्येषां स्फुरणवत्त्वस्य अन्यानंदेना
न्येषां सुखित्वस्य चायोगादितिचेत् । उच्यते सन्घटइत्यादि
प्रत्यक्षं विशेष्यांशरूपब्रह्मविषयमित्याचार्याणां मतं 'अथ
आदेशोनेतिनेतीति' वाक्यश्रुतप्रतिषेधप्रतियोगिविचारा
प्रवृत्ते प्रकृतैतावत्त्वाधिकरणे ननुसन्पटः सन्घटइत्या

ऽनुवृत्तं सद्रूपं ब्रह्म सत्यं अन्याद्यवर्त्तमानं घटादिकं नेति नेतीति प्रतिषेधति श्रुतिरित्याशङ्कोत्तरत्वेन तदव्यक्तमाह "हीति" सूत्रमवतार्य ब्रह्मस्वरूपं प्रत्यक्षादिना प्रमाणान्तरेण नाभिव्यज्यते "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैन" मित्यादिना यतः श्रुतिराह अतः प्रत्यक्षादिना सिद्धा सत्ता न ब्रह्मेति तैरेव तत्सूत्रतात्पर्यस्य विवृतत्वात् अतः प्रागुदाहृतं जन्माद्यधिकरणाम्भरणाधिकरणश्रुतं वाक्यद्वयं विशेषणांशरूपब्रह्मविषयं योज्यं, तस्य समस्तप्रपञ्चप्रकारेण परिणामित्वस्याङ्गीकृतत्वेनाभेदप्रत्यक्षोदाहरणेन तदुपपादनस्योचितत्वात् । नच [ आदिरूपस्य तस्य स्वयमपिज्ञातृत्वात् ] तस्येक्षत्यधिकरणभाष्ये ब्रह्म सत्तारूपत्वेनोक्ततया स्वयं सद्रूपत्वेन तस्यानुभवोक्तिरयुक्तेति वाच्यम्, ब्रह्म प्रतिज्ञानानन्दादिरूपस्य तस्य स्वयमपि ज्ञातृत्वानन्दित्वादिवद्ब्रह्म प्रतिसत्तारूपस्य तस्य स्वयं सद्रूपत्वस्याप्युपपत्तेः । यत्तु स्फुरणवैषयिकानन्दयोर्जीवगतयोर्ब्रह्मज्ञानानन्दांशत्वमुक्तम्, तज्जीवब्रह्मभेदेप्युपपद्यते, तत्तत्कर्णपुटावच्छिन्नस्य नभसो दिग्रूपस्य देशस्य वा तत्तज्जीवासाधारणश्रोतृत्ववत् तत्तदन्तःकरणकृताभिव्यक्तस्य ब्रह्मज्ञानानन्दांशस्य तत्तज्जीवासाधारणस्फुरणसुखरूपत्वस्याङ्गीकारसंभवात् ।

'नन्वभावं वादरि' रित्यधिकरणे तत्तदन्तःकरणवृत्त्यवच्छेदमनपेक्ष्यानवच्छिन्नस्यैव परिपूर्णस्य ब्रह्मानन्दस्य मुक्ता-

नुभाव्यपरमपुरुषार्थरूपत्वमुक्तं तत्रहि परप्रकृतिरूपा परम
सत्ता प्रकाशानन्दसमरसा परमशक्तिर्हि परब्रह्मणः स्वरू
पतया परमाकाश उच्यते, या मुक्तानां परमेश्वरस्य
साक्षादर्थक्रियाहेतुः, परंपरयाऽन्येषामिति प्रस्तुत्य तथा
"कोह्येवान्यात्कः प्राण्यादि"त्यादिनाऽऽनन्दाभिर्भावस्त
तम्येन श्रूयत इत्यन्तेन ।

परंपरया त्वन्येषामिति संक्षिप्तमर्थं विविच्य निरु
धिकतया ब्रह्मणि मुक्ते च परिपूर्णो वर्त्तते " स आनन्द
श्रोत्रियस्य चाकामहतस्येति" श्रवणादिति संदर्भेण या
क्तानां परमेश्वरस्य च साक्षादर्थक्रियाहेतुरिति भागस्या
विवेचितस्तदनन्तरं न यद्यकामहतः श्रोत्रियोमुक्तस्तदा
मानुषानन्दप्रभृतीनां प्राजापत्यानन्दपर्य्यन्तानामुपाधि
शेषवशात्तारतम्येनाभिव्यज्यमानब्रह्मानन्दांशरूपाणाम
महतश्रोत्रियानुभाव्यत्वमभिहितमित्याशङ्कापरिहाराये
ब्रह्मार्पणबुद्ध्या निष्कामानुष्ठिताग्निहोत्रादिकर्मा परिनिद्ध
कामहतश्रोत्रियस्तस्य मुक्तस्य ब्रह्मणश्च तुल्य एवानन्दः त
यागातिशयेन तत्तद्भूमिमधिरूढस्य पूर्वत्र पूर्वत्र भूमावभ्या
स्वल्प इति तदनुसारेण तत्तद्भूमौ तदीयानन्दाविर्भाव
मानुषाद्यानन्दसाम्याकृतिरिति न विरोधइति तदेतत् व
जीवब्रह्मभेदपक्षे संगच्छते अन्यानन्दस्य हि स्वकीयकिञ्चि
त्यवच्छेदेन स्वासाधारणतामतीतस्यान्यानुभाव्यपरमपुरु
र्थत्वरूपत्वं न युज्यत इति चेत् तदपि संगच्छत एव परब्रह्म

शिवस्य परमानन्दरूपा ज्ञशक्तिर्हि सकलचिदचित्प्रपञ्चाकारा भाष्यकारैरिष्यते तथाच तस्याः सर्वानपि जीवान्प्रति तत्तत्स्वरूपाभेदात्स्वरूपानन्दत्वं तत्तच्चिच्छक्तिरूपधर्माभेदात् धर्मानन्दत्वमप्यस्ति तथापि मलाविलान् संसारिणः प्रति तत्तदात्माभेदेन तद्धर्म्माभेदेन स्वरूपमात्रेण वा सा न भासत इति तदन्तःकरणवृत्तिविशेषावच्छेदकृततारतम्यवता लेशरूपेण सा पुरुषार्थः मुक्तान्प्रति तत्त्रिविधेनापि प्रकारेण भासत इत्यखण्डेन परिपूर्णरूपेणेति विशेषः एवं ब्रह्मण इव मुक्तानामपि साधर्म्यं भूतानन्दरूपतया पुरुषार्थो भवतीत्येतद्भाष्येऽपि स्फुटीकृतम् । निरुपाधिकतया ब्रह्मणि मुक्तेषु च परिपूर्णो वर्त्तते स आनन्द इति मनाग्जीवब्रह्मभेदेऽपि ब्रह्मानन्दस्य जीवान् प्रति पुरुषार्थत्वमुपपद्यत इति न तदनुसारेण भाष्यकारैः कण्ठतः प्रसाधितस्य जीवब्रह्मभेदस्य भङ्गः शङ्कनीयः। प्रसाधितः खलु संसारस्तदंशाधिकरणे तत्र हि ब्रह्मैव सत्योपाधिवशान्मिथ्योपाधिवशाद्वा जीवभावमापद्यत इति पूर्वपक्षं कृत्वा तत्परिहारपूर्वकं विशिष्टरूपब्रह्मैकदेशविशेषणत्वात्मकं ब्रह्मांशत्वं जीवस्य स्थापितमतो मिथ्योपाधिना सत्योपाधिना वा ब्रह्मैव जीवभावमापद्यत इति पूर्वपक्षनिरासार्थत्वेनाभासा एव वा द्रष्टा नियमादभिसंधादिष्वपि चैवं प्रदेशादिति चेत्, नान्तर्भावादिति तदधिकरणान्तर्गतं सूत्रचतुष्टयं योजितं तस्माच्चिदचित्प्रपञ्चाकारशक्तिविशिष्टं ब्रह्मेति विशिष्टाद्वैतपक्ष एवाचार्याणां परमसिद्धान्तो न तु नि-

र्गुणं नीरूपं निःप्रपञ्चं ब्रह्मेति शुद्धाद्वैतपक्ष इति ॥ एवमापा-
ततः प्रतिभानेपि सूक्ष्मदृष्ट्या भाष्यच्छायापरामर्शे शुद्धाद्वै-
तमेव तेषां परमसिद्धान्तः । तथाहि "अनियमः सर्वेषामविरोध
शब्दानुमानाभ्यामिति" सूत्रम्, एषु ब्रह्मोपासनेषूपकोसलवि-
द्यादिषु अर्चिरादिगतिः श्रुता सा तेष्वेव नियता नोपा-
सनान्तरेषु भवत्यश्रुतत्वादिति पूर्वपक्षनिरासार्थत्वेन प्रथ
भाष्ये योजितम् । एषु श्रुतार्चिरादिगतिस्सा तेष्वेवेति न निय
अपि तु सर्वेषां ब्रह्मोपासनानां भवत्येव तथा सत्येव "त
इत्थं विदुर्ये वाऽमी, अरण्ये श्रद्धां सत्यमुपासते, "अग्निर्ज्यो
तिरहःशुक्र इत्यादि" श्रुतिस्मृतिभ्यामविरोधो भवतीति तद
न्तरमिदं भाष्यं केचिदाहुः । अनियमः सर्वेषामुपासका
अर्चिरादिगतौ नियमाभावः तथासति श्रुतिस्मृतिभ्यामवि
रोध इति । इदं यद्यपि मतान्तरोपन्यासत्वेनप्रतिभाति, तथ
तदनन्तरं तत्रापि न दोषः, निरन्वयोपासकानां तदपे
भावादिति । तस्यापि सौत्रयोजनान्तरस्य निर्गुणोपासका
मर्चिरादिगत्यपेक्षाभावेन स्वाभिमतहेतुनैवादुष्टत्वोपपा
नात् । आद्या सूत्रयोजना सकलसगुणोपासनासाधारण्य
द्वितीया निर्गुणोपासनायामपि तत्प्राप्तौ ततोव्यावर्त्तनार्थे
योजनाद्वयमपि वर्णकद्वयरूपेण स्वपक्षतयाऽङ्गीकृतमित्यु
यते, तथा तदापीतेरित्यधिकरणावसानेपि एतन्मतान्तरमु
न्यस्तं तदधिकरणमेवं समाना चा मृत्यूपक्रमादमृतत्वं वे
पूर्वाधिकरणोपपादितोत्क्रान्तिस्तत्पूर्विका गीतिश्च विदुष उ

पद्यते न वेति संशये सति नोपपद्यते, यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः "अथ मर्त्योऽमृतोभवत्यत्र ब्रह्मसमश्नुत" इति विदुषोत्रैव ब्रह्मप्राप्तिश्रवणात् "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतनेनैष आत्मा निष्क्रामती" त्यादिना इति तु कामयमान इत्यन्तेनोत्क्रान्तिप्रकारं देहान्तरपरिग्रहं यावत्कर्मावसानं तेन देहान्तरेण कर्मफलभोगं पुनः कर्मार्जनायैतल्लोकप्राप्तिमुक्तस्योत्क्रान्तिप्रकारादेरविद्वद्विषयत्वं चोक्ता। "अथाकामयमानोयोकामोनिःकामः आत्मकामआप्तकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येतीति" विदुष उत्क्रान्तिप्रतिषेधाच्च। नच विदुष एव तत् "यइत्थं विदुरि" त्यादिश्रुतिष्वर्चिरादिगतिः "तयोर्ध्वमायन्नमृतत्त्वमेती"त्यादिश्रुतिषूत्क्रान्तिस्तस्य श्रूयत इति शङ्क्यम् । अस्य सोम्य पुरुषस्य प्रयतोवाङ्मनसि संपद्यते मनः प्राणे प्राणास्तेजसि तेजः परस्यां देवताया" मिति श्रुतौ विदुषोदेहपातसमय एव-वागादिमतः प्राणभूतसूक्ष्माणां परस्यां देवतायां परब्रह्मणि लीनत्त्वस्योक्तत्त्वेन तस्येन्द्रियमनःप्राणभूतसूक्ष्मापेक्षागतिर्नोपपद्यत इत्युपपत्तिसाहित्येन सर्वत्र परब्रह्मणः सत्त्वेन गत्युत्क्रान्त्यपेक्षा नास्तीत्युपपत्तिसाहित्येन चात्रैव ब्रह्मप्राप्तिश्रुतेरुत्क्रान्तिप्रतिषेधश्रुतेश्च प्रबलतया तदनुसारेण गत्युत्क्रान्तिश्रुत्योः क्रममुक्त्यर्थब्रह्मविद्विषयत्वस्य वक्तव्यत्वात् । नचास्य सोम्य पुरुषस्येत्यादिश्रुतौ वागादीनां परस्यां देवतायां वृत्तिलयोविवक्षितोनस्वरूपभावल : विद्वदविद्वत्साधारण-

स्य प्रायणस्य निरूप्यमाणत्वेनाविदुषोवागादीनां ब्रह्मण्यपि स्वरूपलयस्य वागादीनां मनः प्रभृतिषु स्वरूपलयस्यासंभवितया तद्विषये संपद्यत इति शब्दस्य वृत्तिलयार्थत्वेन तस्य पुनरर्थान्तरग्रहणायोगाच्चेति वाच्यम्। उदाहृतश्रुतेः सद्विद्यारूपविद्याप्रकरणाम्नातत्वेन तस्यां निरूप्यमाणस्य प्रायणस्याविद्वदेकविषयत्वात् संपद्यतइत्यस्य मनः प्रभृतिषु लीयमानस्य वृत्तिलयार्थत्वेऽपि स्याच्चैकस्य ब्रह्मशब्दवदि न्यायेन परस्यां देवतायामन्वीयमानस्यौचित्यात् स्वरूपलयार्थत्वोपपत्तेश्चेति पूर्वः पक्षः ।

सिद्धान्तस्तु सर्वत्र परमब्रह्मणः सत्त्वेऽपि देशविशेषस्थितस्य प्राप्तौ सत्यामेवदेहबन्धविगमस्तत्प्राप्तिपर्यन्तदेहबन्धोनुवर्त्ते विरजानदीमतिक्रम्य परब्रह्मलोकप्राप्तौ सत्यामेवं कर्मबन्धक्षयोक्तया तावत्पर्य्यन्तं स्थूलसूक्ष्मदेहानुवृत्त्यवगमात्, अतस्तत्रार्चिरादिगतिश्रवणं मुक्तिफलप्राप्त्यर्थमेव [कर्मबन्धक्षयोक्त्या तावत्पर्य्यन्तं स्थूलसूक्ष्मादेः] मुक्तिफलकविद्याप्रकरणाम्नानात् तदपेक्षितत्त्वाच्च। यदुक्तं वागादीनां परस्यां देवतायां स्वरूपतोविलीनत्त्वाद्विदुषोगतिर्नोपपद्यत इति तन्न। यतः शरीरपातानन्तरमपि विदुषः सूक्ष्मं देहमनुवर्त्तते चन्द्रसंवादादिवाक्यरूपप्रमाणात्तथोपलब्धेः । श्रूयते हि पर्य्यङ्कविद्यायां देवयान पथि विदुषश्चन्द्रमसा संवादः "ये चैके चास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ती"त्युपक्रम्य "एतद्वै स्वर्गस्य लोकस्य द्वारं यश्चद्रमाः तं यः प्रत्याहतमतिसृजतोथ (?)

एवं न प्रत्याहतमिह वृष्टिर्भूत्वा वर्षति स इह कीटोवा पतङ्गोवा शकुनिर्वा शार्दूलोवा मत्स्योवा परस्वान्वा पुरुषोवा ऽन्योवै तेषु प्रत्याज्ञायते यथाकर्म यथाविद्यं तमागतं पृच्छति कोसीति तं प्रति ब्रूयादित्यादि" अतस्तदनु रोधाद्यमर्त्योमृतो भवतीत्यमृतत्ववचनममृतत्वप्राप्तेरासन्नत्वमात्रं ब्रवीति योजनीयं नतु देहसंबन्धोपमर्दैन तदानीमेवामृतत्त्वं ब्रवीति। अस्यसूक्ष्मशरीरस्यक्वचिद्विद्यमानत्वोपपत्तेश्च। तदुपमर्देनामृतत्वं ब्रवीतीति न योजनीयमुपलभ्यते ह्युत्क्रामतोविदुषोपि क्वचित्सूक्ष्मदेहगुण ऊष्मा नस्थूलदेहगुणःअन्यत्रानुपलम्भात्। यदुक्तं न तस्य प्राणा उत्क्रामन्तीति विदुषः प्राणानामुत्क्रान्तिः प्रतिषिध्यत इति तन्न। अत्रहि शारीराज्जीवात्प्राणानामुत्क्रान्तिः प्रतिषिध्यते नतु शरीरात् तस्येत्यस्याकामयमान इति प्रकृतजीवपरत्वात् । ननु तस्येति षष्ठ्या प्राणानां संबन्धित्वेन जीवोनिर्दिष्टः नतूक्रान्त्यपादानत्वेन, तदपादानं तु शरीमेव जीवात्प्राणानामुत्क्रान्तेरप्रसक्त्या तत्प्रतिषेधायोगादितिचेत् न । अपादानापेक्षायामश्रुताच्छरीरासंबन्धितया श्रुतस्य जीवस्यैवापादानत्वेनापि ग्राह्यत्वात् । प्राणानां जीवसंबन्धितयैव प्रज्ञातानां तत्संबन्धकथने प्रयोजनाभावेन संबन्धमात्रवाचिन्याः षष्ठ्याः "न तस्य श्रृणोती" त्यादाविवापादानत्वरूपविशेषपरतौचित्याच्च । स्पष्टश्चैकेषां माध्यन्दिनानां शाखायां जीवस्यैवापादानभावः "न तस्मात्प्राणा उत्क्रामन्ती"ति हि तेषां पाठः । नचाप्रसक्तप्रतिषेध

दोषः अत्र ब्रह्मसमश्नुत इत्यादिवचनेऽत्रैव ब्रह्म संपत्तिवच
नेन प्राणानामपि तस्मिन्नेव काले विदुषोऽजीवाद्विश्लेषप्रसक्ति
सत्त्वात् । स्मर्य्यते च विदुषोऽपि मूर्धन्यनाड्या निःक्रान्ति
"ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्य्यमण्डलं ब्रह्मलोकमतिक्रम्य
तेन याति परां गतिमिति" । एवमिदमधिकरणं तदापीतेः
संसारव्यपदेशात् सूक्ष्मं प्रमाणतश्च तथोपलब्धेः नोपमर्द्देनात
अस्यैव चोपपत्तेरूष्माप्रतिषेधादिति चेत् न । शारीरात्स्प
ह्येकेषां स्मर्य्यते चेति षड्भिः सूत्रैर्वर्णितम् । एवं ब्रह्मविदुषः
गत्युत्क्रान्तिव्यवस्थापनेन निर्गुणब्रह्मविदोऽत्रैव ब्रह्म संपत्तिव
र्त्तिता स्यादिति शङ्कापरिहाराय, अनियमाधिकरणावसा
लिखितम् । मतान्तरमेतदधिकरणावसानेऽपि लिखितं, केचि
न्वयोपसकानामिह शरीरपात एवमुक्तिरित्यर्चिरादिगति
यतामाहुरित्येतन्मतं परिगृहीतवतामाचार्य्याणामयमाशय
तु कामयमान इत्यविद्वद्विषयं परिसमाप्याथाकामयमान
विद्वद्विषये विशेषाभिधानं प्रतिज्ञाय न तस्य प्राणा उ
मन्तीति यदुच्यते तदविदुषः प्राणानां यदपादानमुत्क्र
प्रागुक्तं तदपादानस्यैवोत्क्रमणस्य प्रतिषेधपरमिति
द्विषयं विशेषाभिधानप्रतिज्ञानं तस्य स्वारस्येन प्रतीयते
अविदुषश्च प्राणानां शरीरापादानकमेवोत्क्रमणं प्राग
तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा
नूत्क्रामन्तीति अनुजीवस्य यत उत्क्रमणमुक्तं ततएवोत्क्रम
मुख्यप्राणस्येन्द्रियाणां च विवक्षितमिति जीवानुत्क्रमण

क्तनाऽऽम्नीयते जीवस्य तु शरीरादेवोत्क्रमणमुक्तमिति निर्विवादम्।

एवं न तस्य प्राणा इति वाक्यस्य शरीरापादनकोत्क्रमणप्रतिषेधपरत्वे स्वरसतः प्रतीयमाने केन हेतुना तस्य तत्त्यक्तव्यं न तावत्प्राणसंबन्धितया श्रुतस्य जीवस्यैव तदुत्क्रमणापादानतयाऽपि ग्रहणे संभवति मनस्यविपरिवर्त्तमानस्यापादानान्तरस्य कल्पनं न युक्तमिति न्यायानुसारेण पूर्वसंदर्भमारभ्य शरीरस्य तदपादानत्त्वेन विपरिवर्त्तमानत्त्वात् "प्रजापतिर्वरुणायाश्वमनयत् सत्त्वां देवतामार्च्छत्सपर्य्यदीर्यत् स एतं वारणं चतुष्कपालमपश्यत् तं निरवपत् ततोवै स वरुणपाशादमुच्यत इत्युपक्रमच्छायया अश्वदातुर्वारुणचतुष्कपालेष्टिर्विधास्यत इत्यस्मिन्नर्थे मनसि विपरिवर्त्तमाने वरुणोवा एनं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात्तावतोवारुणान् चतुःकपालान्निर्वपेदिति, तदनन्तरपठिते विधिवाक्ये साक्षादधिकारिसमर्पकतया श्रुतेर्योऽश्वं प्रतिगृह्णातीति शब्दे सत्यपि प्रतिगृहीतुरधिकारित्त्वं नेष्यते इह जीवस्यापादानत्त्वप्रतिपादकशब्दरहितस्य केवलन्यायमात्रेणापादानत्त्वकल्पनं नैव शक्यमिति किमु वक्तव्यं नापि तदनन्तरसंदर्भानुसारेणातदनन्तरं हि ब्रह्मैव सन् ब्रह्माप्येति तदेष श्लोकोभवति यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः अथमर्त्त्योऽमृतोभवत्यत्र ब्रह्म समश्नुत इति तत् तथाहि निर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयि-

तैवमेवेदं शरीरं शेते । अथायमशरीरोमृतः प्राणोब्रह्मैव
तेज एवेत्येतावान्वाक्यसंदर्भः श्रूयते तत्र प्रथमवाक्यं ताव-
न्नित्यसिद्धब्रह्मभावाभिव्यक्तिं विदुषः प्रतिपादयत्तस्य स्थान-
विशेषप्राप्त्यर्थं गत्यपेक्षाभावात् गत्युपयोगिप्राणानामुत्क्रमणं
नापेक्षितमिति शरीरापादानकतदुत्क्रमणप्रतिषेधार्थग्रहण
एवानुकूलं नतु जीवप्राणाविश्लेषरूपार्थग्रहणे । नच ब्रह्मा-
प्येतीति वचनं ब्रह्मणोविदुषश्च प्राप्यप्राप्तिभावेन भे
प्रतिपादयतीति तस्य ब्रह्मभावाभिव्यक्तिपरं न भवति अतो
ब्रह्मैव सन्नित्यत्रैवकार इवार्थइति ज्ञानविकासेन ब्रह्मसदृशो
भवन्नेव ब्रह्म प्राप्नोतीति तदर्थोग्राह्य इति वाच्यं अप्येति
शब्देहि न प्राप्त्यर्थः किंतु लयार्थः लयश्च तस्य प्राणे
न्द्रियमनोविशिष्टं स्थूलरूपं विहाय विशुद्धेन सूक्ष्मरूप
तदात्मताभिव्यक्तिरेव । यदि चायं प्राप्त्यर्थः स्यात्तदाप्य
तादात्म्याभिव्यक्तिरेव तदर्थः पर्यवस्यति, बृहदारण्यक एव
सतोमासद्गमय तमसोमाज्योतिर्गमय मृत्योर्मामृतं गमये
मन्त्रान् पठित्वा स यदाह असतो मासत् गमयेति मृत्य
असत्सदमृतं मृत्योर्मामृतं गमय अमृतं माकुर्वीत्येवैत
तमसोमाज्योतिर्गमय मृत्युर्वै तमोज्योतिरमृतं मृत्योर्माम
तं गमय अमृतं माकुर्वीत्येवैतदाह मृत्योर्मामृतंगमयेति न
तिरोहितमिवास्तीति तन्मन्त्रत्रयव्याख्यानरूपब्राह्मणे गम
येति प्रापणार्थशब्दानां ऐक्यसंपादनार्थत्वेन व्याख्याततय
ऽन्यत्रापि तत्समानार्थकवाक्येषु प्राप्त्यर्थकशब्दानामैक्या

भिव्यक्तिपरत्वावसायात् । तथा श्लोकरूपं द्वितीयवाक्यमपि शरीरापादानकोत्क्रमणप्रतिषेधरूपार्थग्रहणएवानुकूलमिति स्पष्टमेव । नच तत्रात्र ब्रह्म समश्नुत इति वर्तमानसामीप्ये वर्त्तमानप्रत्यय इति, अत्रेति ब्रह्मप्राप्तिशैघ्न्यप्रतिपत्त्यर्थोऽर्थवाद इति च योजनीयं मुख्यार्थग्रहणस्यैवोचितत्वात् । तृतीयवाक्यमपि विदुषा त्यक्तस्य शरीरस्य वल्मीकादनपसृतेन सर्प्पेण त्यक्तं कञ्चुकं वल्मीकगतं दृष्टान्तं प्रतिपादयत्तदर्थग्रहणएवानुकूलम् । चतुर्थवाक्यमपि त्यक्तशरीरस्थमुक्तस्य विदुषः सर्वप्राणनहेतुपरब्रह्मभावं तदुपपत्यर्थं तेज एवेति विशुद्धज्ञानरूपत्वं च प्रतिपादयत्तत्रैवानुकूलं अतो न वाक्यदोषानुसारेणापि न तस्य प्राणा उत्क्रामन्तीत्यस्य स्वारसिकार्थत्यागो युक्तः नतु माध्यन्दिनशाखायां उदाहृतवाक्यस्यानेन तस्मात्प्राणाउत्क्रामन्तीतिपाठोदृश्यते अतस्तदनुसारेण काण्वशाखायामपि तस्येति षष्ठ्याः संवन्धसामान्यवाचिन्या अपादानत्वरूपसंवन्धविशेषपर्यवसानकल्पनं युक्तम् । एवं च यद्यपि न तस्य प्राणा उत्क्रामन्तीति प्रथमवाक्ये विदुषः शरीरपाते अविद्वदपेक्षया विशेषाभिधानं न लभ्यते तथाप्यग्रे ब्रह्मप्राप्त्युक्त्या विशेषाभिधानं लभ्यते इति तन्मात्रविषयाविशेषाभिधानप्रतिज्ञेति कथंचिद्योजनीयमिति चेन्नैवम् । न तस्मात्प्राणा उत्क्रामन्तीत्यतदनन्तरमत्रैव समवलीयन्त इति प्राणानामत्र ब्रह्म समश्नुत इतिश्लोकार्थानुगुण्येनात्रैव लयश्रवणात् तदनुसारेण तस्मादिति पदस्य

शरीरशरीरिणोरभेदोपचारेण शरीरपरतया नेतव्यत्वात्,अत
एवार्तभागप्रश्ने यत्रायं पुरुषोम्रियते उदस्मात्प्राणा उत्क्रा-
मन्ति आहोनेति प्रश्नोत्तरं नेति होवाच याज्ञवल्क्योत्रैव सम-
वलीयन्त सउच्छयत्याध्माते मृत श्येत इति प्राणोत्क्रान्त्यप-
दानस्याध्मानेन वायुपूरणेन इति यदुच्छ्व यनस्याशरीरधर्मस्य
कीर्तनं दृश्यते तन्नार्त्तभाजगे प्रश्नोत्तरे न विद्वद्विषये उत्तर
संदर्भविरोधात् । उत्तरसंदर्भे हि यत्रास्य पुरुषस्य मृतस्याग्नि
वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं
पृथिवीं शरीरमाकाशमात्मा औषधीर्लोमानि वनस्पतीन्
केशाः अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरु-
षोभवतीति पुनरार्त्तभागप्रश्ने याज्ञवल्क्येनार्त्तभागेन
रहसि समं न पुण्यपापरूपं कर्म तदाश्रयत्वेन निश्चित
मित्याम्नायते । तदनन्तरसंदर्भे श्रुत्यैव तथा प्रतिपादना
तत्रहि श्रूयते तौ होत्क्रम्य मन्त्रयाञ्चक्राते तौ ह यत् ऊचतुः
कर्म हैव तदूचतुः अथ यत्प्रशशंसतुः कर्महैव तत्प्रशशंसतुः
पुण्योवै पुण्येन कर्मणा भवति पापः पापेनेति नत्रा
पुनर्मृत्युं जयतीति पूर्ववाक्ये संसारतरणरूपं फलमुच्यते ते
प्रकृतविद्वद्विषयत्वमुत्क्रान्तिप्रतिषेधस्यावसीयते इति वा
अग्निर्वै मृत्युः सोपामन्नमित्यपामन्नत्वोपासनमुक्त्वा हि तस्
फलमपपुनर्मृत्युं जयतीत्युच्यते तस्मादग्निजय एवात्र मृत्यु
जया न संसारतरणम् । अतोस्य वाक्यस्य विद्वद्विषयत्वाद
विदुषश्च शरीरात्प्राणानामुत्क्रान्तेरवश्यंभावाज्जावात्तेषां उ

क्रान्तिप्रतिषेध एव तदर्थोग्राह्यः इतश्चैतदेवं यत्रायं पुरुषो-
मृय?त इति पूर्ववाक्ये पुरुषशब्देन प्राकृतोजीव एवास्मा-
त्प्राणा उत्क्रामन्तीत्यत्र सर्वनाम्ना परामर्षणीयः। नच तत्र
पुरुषशब्दस्य शरीरपरत्वं शङ्कनीयं यत्रास्य पुरुषस्याग्निं
वागप्येतीत्युत्तरसंदर्भे पृथिवीं शरीरमिति प्रकृतपुरुषसंब-
न्धित्वेन शरीरस्य पृथक्कीर्त्तनात्। नचाकाशं आत्मेत्या-
त्मापि पृथक्कीर्त्तितः इति वाच्यं तत्रात्मशब्दस्यानन्दमात्मे-
त्यत्रेव मध्यावयववाचित्वेन हृदयावकाशपरत्वात्। एवंच स
उच्छ्वयतीति वाक्ये तच्छब्दः शरीरशरिणोरभेदोपचारेण
शरीरपरतया नेतव्य इति चेन्नैवम्। अविद्वद्विषयत्वे प्राण-
विश्लेषस्याप्रसक्तत्वेन तत्प्रतिषेधस्यायुक्ततया प्रश्नोत्तरयोः
विद्वद्विषयत्वस्यावश्यवक्तव्यत्वात्। ननु पूर्वोत्तरप्रश्नोत्तरा-
णामविद्वद्विषयत्वेनानयोरपि प्रश्नोत्तरयोरविद्वद्विषयत्वस्या-
वश्यवक्तव्यत्वात्। जीवप्राणविश्लेषप्रसक्तिर्यथाकथंचित्संपाद-
नीयेतिचेत् न अविद्वद्विषयप्रश्नोत्तरसंनिधिमात्रेण विद्वद्वि-
षयलिङ्गबाधायोगात्। आर्त्तभागप्रश्नपरंपरायां कतिग्रहाः
कत्यतिग्रहा इत्याद्यः प्रश्नः, यदिदं सर्वं मृत्योरन्नं कास्वि-
त्सा देवता यस्या मृत्युरन्नमिति द्वितीयः, यत्रायं पुरुषोम्रि-
यते उदस्मात्प्राणाः क्रामन्तीत्याहो नेति तृतीयः, यत्रायं पुरु-
षोम्रियते किमेनं न जहातीति चतुर्थः, यत्रास्य पुरुषस्य
मृतस्याग्निं वागप्येतीत्यादि पञ्चमः, इति प्रश्नानामेकविषय-
त्वाभावेनैकरूपप्रायपाठासिद्धेश्च। तथापि तृतीयादिप्रश्नानां

म्रियमाणपुरुषवृत्तान्तगोचरत्वेनैकविषयत्वात् चतुर्थपञ्चमयो-
रिव तृतीयस्यापि प्रश्नस्य विद्वद्विषयत्वं वक्तुं युक्तं तत्सं-
निधिबलादितिचेत् उच्यते अश्वलप्रभृतिभिर्याज्ञवल्क्येन
सह मत्सरतो विजिगीषुः कथायां प्रवृत्तस्तमप्रतिभायां पात-
यितुं प्रायेण निगूढाः प्रश्नाः कृताः यथार्त्तभागेनैव ताव-
त्कति ग्रहाः कत्यतिग्रहा इति यज्ञवृत्तान्तविषय इव प्रश्नः
कृतः, अध्यात्मप्रसंगान्तर्गतत्वान्नायं यज्ञवृत्तान्तविषय इति
प्रश्नकौटिल्यमवगत्य प्राणवाग्जिह्वाचक्षुःश्रोत्रमनोहस्त-
त्वचो ग्रहाः अपाननामरसरूपशब्दकामकर्मस्पर्शा अतिग्रहा
इत्युत्तरमुक्तं तथा लाह्यायनिना क्व पारिक्षिता अभवन्नित्यप्र-
सिद्धार्थेन पारिक्षितशब्देन प्रश्नः कृतः यत्राश्वमेधयाजि-
नो अभवन्निति तदर्थं विवृण्वतैव याज्ञवल्क्येनोत्तरमुक्तं तथा
गार्ग्या अहं वै त्वा याज्ञवल्क्य यथाकाश्यो वा वैदेहो वा
उग्रपुत्र ऊयं? धनुरधिज्यं कृत्वा द्वौ वाणवन्तौ सपत्नातिव्या-
धिनौ हस्तेकृत्वोपोत्तिष्ठेत् एवमेवाहं त्वां द्वाभ्यां प्रश्नाभ्या-
उपोदस्थान्तौ मे ब्रूहीति प्रश्नवाक्यच्छाययैव मत्सरविवरणं
कृतम् । एवं चात्र तृतीयप्रश्नस्य अविद्वद्विषयचतुर्थपञ्चमप्रश्न-
सान्निधिरपि त्रयाणामेकविषयत्वव्यामोहजननार्थत्वेनान्य-
थासिद्धौ नार्थव्यवस्थापनक्षमः नतरां ग्रहातिग्रहमृत्युभक्ष्य-
देवतारूपपरस्परभिन्नविषय आद्यद्वितीयप्रश्नप्रतिपक्षितः नत-
मां तृतीयप्रश्नगतविद्वद्विषयत्वलिङ्गवाधित इत्येषा दिक् । तस्मा-
त्सगुणब्रह्मविद्यामात्रव्यवस्थितोत्क्रान्तिपूर्विकार्चिरादिगति-

नविशुद्धब्रह्मविद्यासाधारणीति, अस्मिन्मते सूत्रयोजनाप्रकारस्तु शाङ्करभाष्यदर्शित एवाचार्याणामभिमत इति द्रष्टव्यम् । तथार्चिरादिना तत्प्रथितेरित्यधिकरणावसानेष्येतन्मतान्तरमुपन्यस्तं तदधिकरणमेवं मूर्धन्यनाड्या निःक्रान्तस्य विदुषः परब्रह्मप्राप्तिरर्चिरादिनैकेनैव मार्गेण उत मार्गान्तरेणापीति संशये पूर्वपक्षः मार्गान्तरेणापि ब्रह्मप्राप्तिरस्ति नखल्वन्तरेण तालुके य एष स्तनइवावलम्बते सेन्द्रयोनिःयत्रासौ केशान्तोविवर्त्तते व्यपोह्य शीर्षकपाले इति व्याहृतिविद्यायां श्रुतानि तालुकान्तरावलम्बमानावयवकेशान्तशीर्षकपालरूपाणि मार्गपर्वाण्यर्चिरादिमार्गे श्रूयन्ते शैब्यप्रश्ने ससामभिरुन्नीयते ब्रह्मलोकमिति सामवेदपठितानां साम्नामेव ब्रह्मलोकपर्य्यन्तं प्रापकत्वं श्रूयते दहरविद्यायां यत्रैतदस्माच्छरीरात् उत्क्रामन्ति अथैतैरेव रश्मिभिरूर्ध्वमाक्रामति इति सूर्य्यरश्मिनामितरव्यवच्छेदेन प्रापकत्वं श्रूयते । तथान्यत्र सयावत् क्षिप्येन्मन स्तावदादित्यं गच्छेदितित्वरावचनादादित्यप्राप्तेरर्चिरादिपूर्वपर्वानपेक्षत्वं प्रतीयते । एवं च यथास्थानं प्रकरणभेदेन विद्याभेदेन च व्यवस्थितेन तेन मार्गेण ब्रह्मप्राप्तिर्नत्वर्चिरादिनैकेनैवेति सिद्धान्तः सुप्रसिद्धस्तावदर्चिरादिमार्गः सर्वविद्यासाधारण इति छान्दोग्ये पञ्चाग्निविद्यायाम्, तद्य इत्थं विदुः येचेमेऽरण्ये श्रद्धां तपः इत्युपासते इति तथा बृहदारण्यकेऽपि एवामी अरण्ये श्रद्धां सत्यमुपासत इति, ननु यासु विद्यासु न कश्चिदपि मार्गः श्रूयते तद्विषयमिदमु-

पासत इति विद्वदनुकीर्त्तनं भविष्यति भवेदेतदेवं यदि
मार्गैक्यमशक्योपपादनं स्यात् शक्यते तदुपपादयि
तथाहि व्याहृतिविद्यायां स्तनाकृतिनेन्द्रस्य जीवस्य परमे
श्वरस्य वा स्थानभूतावयवेन निर्गत्य केशान्तस्थानस्य शि
कपालस्यातिघनं यदुक्तं तन्मूर्धन्यनाड्यानिष्क्रमणमेव तद
न्तरं भूरित्यग्नौ प्रतिष्ठते भुव इति वायौ सुवरित्यादित्य इ
यदग्न्यादीनामनुकीर्त्तनं तदर्चिरादिमार्गपर्वभूतानामेव त
यदग्न्यादिषु प्रतिष्ठितत्त्वश्रवणं तत्तेषु कियत्कालं विश्रान्ति
रस्तीत्यभिप्रायेण व्याहृतिविद्यायां मह इति चतुर्थव्याहृ
रूपस्य ब्रह्मण इव व्याहृतित्रयरूपाणामग्न्यादीनां अप्यु
स्यत्वमस्तीति तद्बलात्तेषां लोकेषु विश्रान्तिवचनं युक्तं
सामभिरुन्नीयते ब्रह्मलोकमित्यत्र यः पुनरेतं त्रिमात्रेणो
त्येतेनैवाक्षरेण परं पुरुषमभिध्यायीतेत्येकमात्रद्विमात्रप्रण
साधनकोपासनानुकीर्त्तनानन्तरं त्रिमात्रप्रणवसाधनको
सनाविधानात्तत्रप्रणवमात्राणां ऋग्युजःसामरूपतया प्र
पादितत्त्वाच्च विद्यासाधनप्रणवतृतीयमात्रा रूपा[विधाना
प्रणवमात्राणां त्री]ण्येव सामानि विद्यासाधनतया ब्रह्मप्र
कत्वेनानुकीर्त्तितानि नतु मार्गतया । अथैतैरेव रश्मिभि
त्यत्रावधारणं रश्मिविधानार्थप्राप्ततदयोगव्यवच्छेदानुवा
नत्त्वार्चिरादीनां व्यवच्छेदकं एकस्य वाक्यस्य रश्मिप्रा
तदितरव्यवच्छेदे च तात्पर्यासंभवात् त्वरावचनं पितृयाना
पेक्षयोपपन्नं न पूर्वपर्वाणि व्यवच्छिनत्ति नापि विदुषा

मार्गान्तरमवधित्वेनापेक्ष्यते एवं मार्गैक्योपपादने सम्भवति लाघवन्यायानुगृहीतसामान्यमुखप्रवृत्तपञ्चाग्निविद्यावाक्यातिलंघनं न युक्तमिति एवमार्चिरादिगतेः सकलब्रह्मविद्यासाधारण्यव्यवस्थापनान्निर्गुणब्रह्मविदोऽत्रैव ब्रह्मसम्पत्तिर्व्यावर्त्तितास्यादिति शङ्कापरिहारार्थमेतदधिकरणावसानेपि तन्मतान्तरमुपन्यस्तं निरन्वयोपासकानां नार्चिरादिरिति केचिदिति तस्मिन्मते अर्चिरादिना तत्प्रथितेरितीदं सूत्रं प्रथितिग्रहणा त्प्रायोभिप्रायं नेतव्यं अवश्यं च प्रायोभिप्रायपरमिति सर्वैरपि वक्तव्यं हिरण्यगर्भपर्यन्तानां देवानां स्वस्वलोकेषु स्थित्वैव मुच्यमानानां अर्चिरादिमार्गासम्भवात् नच श्रुतिविद्यामनुष्ठायमुच्यमानानां मनुष्याणामयमेकएवमार्गइति नियामेविवक्षित इति वाच्यं मधुविद्योपासकानां च वसुरुद्रादित्यमरुत्साध्यगणपदप्राप्तिपूर्विकायां मुक्तौ वस्वादिपदपूर्वकमार्गान्तरावश्यंभवादित्याचार्याणामाभिप्रायः एवं यत्रयत्राधिकरणे च ब्रह्मविदोगतेरुत्क्रांतेर्वाव्यवस्थापनं क्रियते तत्र सर्वत्रापितस्य तस्याधिकरणस्य सकलब्रह्मवित्साधारण्यशङ्कापरिहार्थमस्यमन्त्रस्योपन्यासादनियमाधिकरणेस्वयमप्यस्योपगमाच्चात्राचार्याणां तात्पर्यातिशयोवगम्यते नच सर्वत्रापि केचिदित्युपन्यासात् अनभिमतत्वं शङ्कनीयं स्वयमिदानीं सगुणविद्यानिष्ठा एव नतु निर्गुणविद्यानिष्ठा इतिद्योतनार्थत्वेन तस्यान्यथासिद्धतया ततः स्वयमुपपादनाभ्यस्तोपन्यासाभ्यामवगतस्य तस्मिन्मते तात्प-

र्यातिशयस्यापह्नोतुमशक्यत्वात् आनंदमयाधिकरणे आनंदमयः परं ब्रह्म तत्प्रतिष्ठारूपं पुच्छब्रह्म उततद्वाचकं प्रणवाख्यं शब्दब्रह्मेत्यस्मिन्नर्थेऽधिकरणशरीरं योजयित्वा तदनंतरं केचिदाहुरिति मतांतरत्वेनोपन्यस्तं आनंदमयश्चिच्छक्तिस्तत्प्रतिष्ठारूपं ब्रह्म तु परं ब्रह्मेति पक्षस्य जन्मादिसूत्रे यः खल्वन्योंतरआत्मानंदमय इति प्रस्तुत्य सैषानंदस्य मीमांसा भवतीत्यारभ्याभ्यासान्निरतिशयाशिरस्कत्वेन सएकोब्रह्मण आनंदइति निरूपितः परब्रह्मधर्मत्त्वेन सएवानंदोब्रह्मति प्रचुरत्त्वात् ब्रह्मत्वंनोपचर्यते तादृशानन्दभोगरसिकं ब्रह्म नित्यतृप्तमुच्यत इति स्वमततयोपन्यासदर्शनेनाभिमतपक्ष एवकेचिदित्युपन्यासइत्याचार्य्यशैलीदर्शनाच्च एवं निर्विशेषब्रह्मविद्याभ्युपगमानुगुण्येन विद्याया जीवब्रह्माभेदविषयत्त्वाभ्युपगमोपि प्राणस्तथानुगमादित्यधिकरणे दर्शितत्वात् प्राणोस्मिप्रज्ञात्मा तं मामायुरमृतमुपास्वेतिमुक्त्यर्थमुपास्यतयेंद्रेणोपदिष्टः प्राणःपरमात्मा नत्विंद्रइतिनिर्णीय कथंतर्हि प्राणोस्मीति मामुपास्वेति चोपदेशइत्याशंकापरिहार्थस्य शास्त्रदृष्ट्या तूपदेशोवामदेववदितिसूत्रस्य य आत्मनि तिष्ठन्नित्यादिशास्त्रेण स्वांतर्यामिणं परमात्मानमवगत्य तन्नामरूपाभ्यां व्याक्रियतेत्यादिशास्त्रेणाहमादिशब्दानां स्वांतर्य्यामिपरमात्मपर्य्यंतत्त्वं चावगत्य तद्दृष्ट्यायमिंद्रेण कृतः प्राणोस्मीत्याद्युपदेश इत्येकमर्थमुक्त्वा स्वात्मपरात्मविषयातत्त्वमसीत्यादिशास्त्रजन्यदृष्ट्या वा तथो

पदेश इत्यर्थांतरमुक्तं अथवा वेदांतविज्ञानोपलब्धया ब्रह्मात्मसामरस्यभावनया ब्रह्मभावमुपगतस्य विगर्हितमनुष्यादिदेहविषयकल्पिताहंभावसंकोचस्य संपन्नविश्वाकारपराहंभावस्य वामदेवस्य स्वात्मनः सर्वगतत्वावगमान्मनुसूर्य्यादिप्रपंचभावोक्तिः एवमिंद्रस्यापीति निश्चीयतइति इत्थं निर्गुणविद्यायामभेदभावना संभवेपि सगुणविद्यायां सा न संभवति सगुणस्य परमेश्वरस्य जीवस्य च सर्वज्ञत्वकिंचिज्ज्ञत्वादिविरुद्धावमर्षागतभेदसत्वादित्याशंक्य व्यावहारिकभेदसत्वेपितात्विकाभेददृष्ट्या तदभेदभावनाकार्यात्मतदर्थत्वेनात्मेतितूपगच्छंति ग्राहयंति चेत्यधिकरणं प्रवर्त्तितंतदित्थं ब्रह्मोपासनमुपासकेन स्वात्मभिन्नतया कार्यमुत स्वात्माभिन्नत्वेनेतिसंशये पूर्वपक्षः विश्वाधिकोरुद्रोमहर्षिः अधिकंतु भेदनिर्देशादित्यादिश्रुतिसूत्रेषु प्रत्यगात्मनः पशोर्जीवात्पत्युः परब्रह्मणोर्थांतरत्वेन निरूपितत्वात्सर्वज्ञत्वादिना जीवस्य ब्रह्मभावाघटनाच्च ब्रह्मोपासनं स्वभिन्नत्वेनैव कार्यमिति सिद्धांतस्तु यद्यपि जीवाधिकमेव शिवाख्यं परं ब्रह्म तथाप्युपासिताहं ब्रह्मास्मीति तदुपासीत यतः पूर्वेप्युपासितारः त्वंवा अहमस्मि भगवोदेव ते अहं वै त्वमसीत्येवावगच्छंति नच तत्र शरीरशरीरिभावनिबंधनं सामानाधिकरण्यं तदाह्यहं वै त्वमसीति निर्देशएवोपपद्यते त्वं शब्दनिर्दिष्टे परमेश्वरे स्वशरीरकत्वपर्य्यंतस्याहं शब्दस्य वृत्तिसंभवात्त्वं वा अहमस्मीतिनिर्देशस्तुनोपपद्यते अहं शब्द

निर्दिष्टे परमेश्वरशरीररूपे स्वास्मिन्परमेश्वरवाचिनस्त्वंशब्दस्य वृत्यनुपपत्तेः शरीरवाचिनां हि शरीरपर्यंतत्वं व्युत्पत्तिसिद्धं नतु शरीरिवाचिनां शरीरपर्यंतत्वं नच वाक्यद्वयेपि त्वं शब्दौ प्रस्तुतगुणविशिष्टपरमेश्वरविषयौ अहं शब्दौ स्वशरीरकत्वविशिष्टतद्विषयाविति वाक्यद्वयमप्येकरूपार्थपरमिति वाच्यं तदानीं त्वंवा अहमस्मि अहं वै त्वमसीतिव्यवस्थितयुष्मदस्मच्छब्दपौर्वापर्य्यासमसिशब्दप्रयोगगतवाक्यद्वयवैलक्षण्यवैयर्थ्यापत्तेः एकेनैव वाक्येन स्वान्तर्यामिणः परमेश्वरस्य चाभेदसिद्ध्या वाक्यांतरवैयर्थ्यापत्तेश्च नचाभेदधीदार्ढ्यार्थं वाक्यद्वयं जीवपरमेश्वरयोरिवांतर्य्यामिपरमेश्वरयोर्भेदभ्रांत्यभावेन तद्दार्ढ्यापादनस्यानपेक्षितत्त्वात् अतः कर्मव्यतिहारेण स्वस्मिन्परमेश्वराभेदः परमेश्वरे स्वाभेदश्च भेदाभेदशङ्कानिरासार्थोभेददार्ढ्यार्थः विधित्सितोत्रेत्यवसीयते एव तद्योहं सोसौ योसौ सोहमित्येतरेयवाक्येपिएवमवगच्छतश्चोपासकानर्थान्तरत्वेपिपरब्रह्मस्वरूपतयानुगृह्णाति ते च पुनः स्वात्मतयाग्राहयंति परानपिशिष्यान् तत्त्वमसीत्यादिनात् त्वमसिवाक्येपिसामानाधिकरण्यंशरीरशरीरीतिभावनिवन्धनंनभवति यत स्तत्रत्वंशब्दनिर्दिष्टतच्छब्दनिर्दिष्ट प्राग्वर्णित जगत्कारणत्वाद्युपलक्षितपरमेश्वराभेदोबोध्यतइत्यसिशब्दयोगादवगतेस्त्वंशब्दःसम्बोद्ध्यजीवमात्रपरःनतुतदंतर्यामिपर्यंतं सम्बोध्यंप्रतिस्वात्मनइवस्वांतर्य्यामिणः अनुभवेन वा प्राचीनोपदेशेन वा प्रसिद्धत्वाभावेन तस्य तं प्रत्युद्देश्यतानर्हत्वात्

प्रकृतस्य सद्रूपस्य परमेश्वरस्यकथंचित्स्वांतर्य्यामितया प्रागुद्दिष्टत्त्वसमर्थनेन तत्र तद्भेदशङ्कानुदयेन पौनः पुन्येन तदभेदबोधनापेक्षणादिति नच प्रकृतैतावत्वाधिकरणभाष्ये ब्रह्माभेदभावनायांगरुडाभेदभावनायादृष्टांतीकरणात् तद्वदारोपितविषयत्त्वमेवब्रह्माभेदभावनायभाष्याभिमतं नतु तात्विकाभेदविषयत्वमितिशङ्कनीयंशास्त्रदृष्टिसूत्रेब्रह्मात्मसामरस्यभावनयाब्रह्मभावमुपगतस्येयुक्तया आत्मेति तूपगच्छंतीत्यधिकरणेउपासितुरर्थांतरत्वेपि तानुपासीत ननुगृह्णति स्वस्वरूपतयापरंब्रह्मेत्युक्तयाचाभेदस्यतात्त्विकत्वावगमात् नह्यभेदस्यतात्त्विकत्त्वाभावेवस्तुतस्तत्प्राप्तिरुपपद्यते - उपासितुरर्थांतरत्वेपीत्यनुपादस्तुव्यावहारिकभेदसद्भावेपीत्यतेदर्थःपूर्वपक्षबीजशङ्कानिराकरणार्थ इति न विरोध अतएव निखिलभ्रांत्यादिहेतुपुण्यपापक्षयपूर्वकं परमशिवलोकेतत्सायुज्यं प्राप्तस्यापि शिवाहं भावानुवृत्तिर्विकारावर्त्तिसूत्रभाष्ये प्रतिपादितासदाशिवादीनामधिकारिणां मंडलेषु स्वेच्छयासंचरमाणः कामानां कामरूपाविगलितमनुष्यादिदेहाभिमानो-असंकुचितशक्तित्रयव्यापारः परमानंद प्रकाशमयाविभूतिमयशिवशक्तिसामरस्य परब्रह्मस्वरूपैकरसप्रपञ्चावगाहिनं परिपूर्णमहंभावं प्रकटमनुभवति तथाह्यहमन्नमहमन्नमह मन्नमहमंनादोहमन्नाद इतिभोग्यभोक्रादिसकलप्रपञ्चभावपरिपूर्णाहंभावभावनास्थावगम्यत इति यद्यपि शिवसायुज्यंप्राप्तस्याचिच्छक्तिविकाशेनजगद्व्यापकतावस्थापन्नस्य प्रपं-

चनियमनशक्त्युन्मीलनात्सर्वशरीरकस्य सतः सकलभोग्य-
भोक्तृशरीरकत्वप्रयुक्तः पराहंभावः शिवाभेदभावनामनपे-
क्ष्यस्वतोपिसंभवति असंततेश्चाव्यतिरेक इत्यादि सूत्रभा-
ष्येषु तस्य तथाभूतस्यापि पराहं भावस्य दर्शितत्वात् तथापि
सोत्रभाष्येन विवक्षितः किंतु ब्राह्मएव पराहं भावः नच
ब्रह्मस्वरूपैकरसप्रपञ्चावगाहिनः इत्यहं भावविशेषः स्यात
नचतत्र धीप्रपंचस्यब्रह्मस्वरूपांतर्गतिरेवोक्तानतु स्वशरीरत्वं
आदेहयातंशिवाहंभावनादार्ढ्यवतस्वयमभावनात्कस्य यथे
ष्टयानसमयेष्वपितदनुवृत्तिरेववक्तुमुचिता एवमभेदभावना-
प्रदर्शक भाष्येस्वाभिमतत्त्वेनाविष्कृतोजीवब्रह्माभेदोवदतीति
चेत् प्राज्ञाहिप्रकरणादित्यानुमानिकाधिकरणसूत्रभाष्येपि
कयाचिदुक्ति भंग्याविष्कृतः तत्राधिकरणेमहतः परमव्यक्त-
मव्यक्तात्पुरुषः पर इति कठवल्ली मंत्रश्रुतमव्यक्तं सांख्याभि
मतं प्रधानमित्युदाहृतश्रुतिमूलसांख्यसिद्धांत इति पूर्वपक्ष
निराकरणार्थं प्रवृत्तेन ज्ञेयत्वावचनाच्चेति गुणसूत्रेण सिद्धां
हेत्वंतरमुक्तंयदीदमेव वाक्यंसांख्यमतस्य मूलमभविष्य
तदा प्रकृतिपुरुषविवेकज्ञानात्कैवल्यमिति वदतः सांख्य
स्याभिमतं प्रधानस्य मुमुक्षुज्ञेयत्वमप्यत्रावक्ष्यत् तदत्र नो
च्यते अतो नैतन्मूलकं सांख्यमतमिति श्रद्धेयं नहि यन्मू
लमेव यच्छास्त्रं तत्र तच्छास्त्रवर्णितं नोक्तमिति युज्यत इ
नन्वसिद्धं हेयत्वावचनं अशब्दमस्पर्शमरूपमव्ययमिति मंत्रे
कठवल्ली श्रुतिर्हि शब्दादिहीनस्य महत्तत्वात्परस्याव्यक्तस्य

ज्ञेयत्वं वदतीति पुनः सांख्यशंकामनूद्य तन्निराकरणप्रकारप्रदर्शनार्थं वदतीति चेदिति सूत्रं तेनमन्त्रेण परमेश्वर उच्यते नप्रधानपरमेश्वरस्यैव प्रकरणादितितन्निराकरणप्रकारदर्शनार्थं प्राकरणिके परमेश्वरविषये मंत्रे उदाहरणीये यच्छेद्वाङ्मनसीतद्यच्छेज्ज्ञानमात्मनि ज्ञानमात्मनि महतिनियच्छेच्छांतआत्मनीति मंत्र उदाहृतोभाष्ये एवंहि तस्य सूत्रस्यभाष्ये । अशब्दमस्पर्शमरूपमव्ययंतथारसंनित्यमगंधवच्चयत् अनाद्यनंतंमहतःपरंध्रुवं निचायतन्मृत्युमुखात्प्रमुच्यते इत्यग्रे तन्मंत्रोस्यापि ज्ञेयतां वदतीति चेन्न यच्छेद्वाङ्मनसी प्राज्ञ इति प्राज्ञस्यैव पूर्वं प्रकृतत्त्वात् इति अत्र सूत्रे प्राज्ञशब्दोपादानादस्मिन्मंत्रे यः प्राज्ञशब्दोदितस्येदं प्रकरणमिति भाष्यवाक्यस्य स्वरसतोर्थः प्रतीयते अस्मिन्मंत्रे प्राज्ञशब्देन मुमुक्षुर्जीवउक्तः तं प्रत्येववाङ्मनसादिनियमनाविधानस्यार्थवत्त्वात् परमात्मनश्चात्र प्रकरणमिष्टं महतः परमव्यक्तमव्यक्तात्पुरुषः परः पुरुषान्नपर किंचित्साकाष्ठासापरागतिरिति तस्यात्रप्राधान्येन प्रतिपिपादयिषितत्त्वात् एवं चात्र भाष्यकाराणां यदि जीवपरमात्मनोरभेदोहृदयस्थोनभवेत् तदा परमात्मपरेण शब्देन प्रकरणिनिउदाहरणीये जीवपरेणशब्देनतदुदाहरणमसमंजसमेवस्यात् एवमपि कथंनासमंजसंजीवपरमात्मनोर्वास्तवाभेदाभ्युपगंतृभिरपि व्यावहारिकेण तयोर्विभागेन वेदान्तेष्विदं जीवप्रकरणमिदं परमात्मप्रकरणमिति व्यवस्थितेरभ्युपगतत्वादिति चेदुच्यते कठवल्लीषु येयं प्रेतेविचिकित्सा मनु

ष्ये अस्तीत्येकेनायमस्तीति चैके तद्विद्यामनुशिष्टस्त्वया वरा-
णामेषवरस्तृतीय इति मृतजीवविषयप्रश्ने नचिकेतसाकृते-
तंदुर्दशगूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणं अध्यात्मयो-
गाधिगमेन धीरो देवंमत्वा हर्षशोकौ जहातीति वैवस्वतेन
परमात्मविषयं तदुत्तरमुक्तं तथाहि प्रश्नस्य तावन्मृतजीव
विषयत्वं सुदृष्टं प्रेतशब्दस्य तत्ररूढत्त्वात् इमारामासरथा-
सऊर्प्याः नहीदृशालंभनीयामनुष्यैः आभिर्मत्प्रत्ताभिः परि-
चारयस्व नचिकेतोमरणन्नानुप्राक्षीरिति वैवस्वतेन तदीयप्र-
श्नस्य मृतजीवविषयत्त्व स्फुटीकरणात् यस्मिन्निदं विचिकि-
त्सन्तिमर्त्याः सांपरायमहति ब्रूहिनस्तदिति पुनर्नचिकेतसा
मरणविषयत्वेनामंगलतया वैवस्वतेन निंदितस्यैव स्वप्रश्न-
स्यनिर्णेयत्त्वेन पृष्टत्वात् तदनंतरं वैवस्वतेन नसांपरायः
प्रतिभाति वालंप्रमाद्यंतं वित्तमोहेनमूढं अयं लोकोनास्ति
पर इति मानी पुनःपुनर्वशमापद्यते मह इति नायमस्तीति
चैक इति पक्षदूषणपूर्वकमेवोत्तरस्योपक्रांतत्त्वात अग्रेच हंतत
इदं प्रवक्ष्यामि गुह्यं ब्रह्मसनातनं यथाचमरणं प्राप्यात्मा
भवति गौतमयोनिमन्येप्रपद्यन्ते शरीरित्त्वायदेहिनः स्थाणु
मन्ये तु संयान्ति यथा कर्म यथा श्रुतमिति साक्षान्मृतजी
वविषयवृत्तांतोत्तरदर्शनाच्च तथातंदुर्दर्शमित्यादि उत्तरंप
रमात्मविषयमित्यपि सुदृढं प्रश्नानंतरं वैवस्वतेन देवैरत्रापि
विचिकित्सितं पुरा नहि सुज्ञेयमणुरेषधर्मः अन्यतरं नचि
केतोवृणीष्वमामोपरोत्सीरति मासृजैनमिति प्रश्नस्यास्योत्त

रमतिगहनार्थविषयं वक्तुंदुःशकमित्युक्तत्वात् ततोनचिकेतसा-
देवैरत्रापिविचिकित्सितं किल त्वं च मृत्यो यं न सुज्ञेयमात्थ-
वक्ताचास्यत्वादृगन्योनलभ्योनान्योवरस्तुल्य एतस्यकश्चिदि-
तिपृष्टमेवोपदेष्टव्यमिति प्रार्थिते वैवस्वतेन पुनस्तस्याधिकार-
दार्ढ्यपरिचिक्षिषयाशतायुषंपुत्रपौत्रान्वृणीष्वबहून्पशून्हस्ति
हिरण्यमश्वान्भूमेर्महदायतनंवृणीष्वस्वयं च जीवशरदोयावदि-
च्छसीत्यारभ्य नचिकेतोमरणं मानुप्राक्षीरित्यन्तेपृच्छमानार्था
पेक्षया पुत्रादिसंपत्तेर्महापुरुषार्थतयोक्तत्वेपिनाचिकेतसा श्वो-
भावामर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां क्षयंति तेजः अपि सर्वं
जीवितमल्पमेवेत्यादिना अपिध्यायन्वर्ण इति प्रमोदोनति
दीर्घेजीवितेकोदमेतत्यन्तेनविषयावस्थायित्वेपि संदिग्धत्वेन
सर्वेन्द्रियतेजः क्षपयितृत्वेन निन्दित्वाचिरजीविकामपि ब्र-
ह्मादिकीटान्तसकलप्राणिवर्त्तिनः सर्वस्यापि जीवस्याल्प-
कालत्वेन निन्दित्वाप्राक्पृष्टमेवोपदेष्टव्यमिति दृढं प्रार्थिते
तस्याधिकारस्थैर्यमुपलभ्यानिःश्रेयसमभ्युदयं च पुरुषार्थानु-
बंधिफलद्वयंश्रेयः प्रेयः शब्दाभ्यां विभज्य तदुभयं विवेचन्
धीरः श्रेयोवृणीते मंदस्तु प्रेय इत्याद्युक्त्या नचिकेतसो वरं
प्रशस्य विद्याभीप्सितं नचिकेतसंमन्ये नत्वाकामाबहवोलोलु-
पन्तेति विद्याभीप्सुत्वेभ्यः नतदुपयोगिदृढवैराग्यवत्वेन च
नचिकेतसं प्रशस्य नसांपराय इत्यादिना इहात्मवादपूर्वकं
श्रवयापिबहुभिर्योनलभ्यः शृण्वन्तोपि बहवो ये नविद्युः
आश्चर्योवक्ता कुशलोस्यलब्धा आश्चर्योज्ञाता कुशलानुशिष्ट

इत्युपेदष्टव्यस्यात्मनोदुरधिगमत्वमुक्त्वावैवस्वतेन तंदुर्द्दर्शमि-त्यादेरनुक्रान्तत्वाच्च एवं जीवविषयप्रश्नस्य परमात्मविष-योत्तरदर्शनात् जीवब्रह्मणोरभेदः श्रुत्यभिप्रेत इत्युन्नीयते अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यापत्तेः ननूत्तरं परमात्मवि-षयमस्तु प्रश्नोमृतजीवास्तित्वनास्तित्वविषय इत्येतदनु-पपन्नं नचिकेतसः प्रागेवतदस्तित्वविश्वासवत्वात् अन्यथा पितुः क्रतुवैकल्यदोषपरिहारार्थं तात कस्मै मां दास्यसीति वचनस्य मृत्यवे त्वां ददामीत्युक्तवतः पितुरनृतदोषपरिहा-रार्थं स्वयं मृत्युलोकगमनस्य सस्यमिव मर्त्यः पच्यते सस्यमिवजायतेपुनरिति तदीयवचनस्य स्वर्गफलकाग्निवि-द्याचरणस्यचानुपपत्तेः । वस्तुतोजीवपरमात्माभेदसत्वेपि मृतजीवास्तित्वनास्तित्वविषयप्रश्ने तन्मात्रस्यैव निर्द्धा-रणीयतया परमात्मतत्प्राप्त्युपायाद्युपेदशानुपपत्तेश्च जीवप-रमात्माभेदवादिमतेप्यार्तभागप्रश्नपञ्चाग्निविद्यादिश्रुतेषुजी-ववृत्तांतविषयप्रश्नेषु तन्मात्रविषयाणामेवोत्तराणां सम्प्र-तिपन्नत्वात्तस्मात्प्रश्नोत्तरसामानाधिकरण्यान्यथानुपपत्त्या जीवब्रह्माभेदसिद्धिरिति दुराशां विसृज्य प्रश्नोमुक्तजीवा-स्तित्वनास्तित्वविषयोवर्णनीयः नप्रेत्यसंज्ञास्तीति वाक्ये मुक्तौ प्रेत्यशब्दप्रयोगदर्शनात् प्रकर्षेणरतः पुनरावृत्तिरहित गतिं प्राप्तइति प्रेतशब्दस्य मुक्ते वृत्युपपत्तेश्च एवं च मुक्तेः परमपदाख्यपरमात्मलोकप्राप्तिरूपत्वात्तदर्थमुत्तरेपर-मात्मनिरूपणं सोध्वनः पारमाप्नोति तद्विष्णोः परमं पद-

मिति तदीयपरमपदप्राप्तिनिरूपणं तदुपायनिरूपणं चेति सर्वसंगच्छत इति चेन्न प्रश्नस्य मुक्तवृत्तांतविषयत्वकल्पनेपि स्वर्गसाधनाग्निविद्यावरणानुपपत्तेस्तुल्यत्वात्तत्रहि स्वर्गशब्देनार्चिरादिमार्गेण सकलपुण्यपापक्षयपूर्वकं प्रायः शङ्कितुर्मुक्तप्राप्यपरमपदत्वाभिमतएव लोक उच्यते स्वर्गेलोके न भयं किंचनास्ति न तत्रमृत्युर्नजरया बिभेति उभे तीर्त्वा अशनायापिपासे शोकातिगोमोदते स्वर्गलोकइति स्वर्गलोकमहिमवर्णनपूर्वकं सत्वमग्निं स्वर्गमध्येपि मृत्योः प्रब्रूहितं सदाधानायमैशं स्वर्गेलोकाअमृतत्वंभजन्ते एतद्द्वितीयेन वृणे वरेण्येति तत्साधनाग्निविद्योपदेशस्य दृढत्वात् वैवस्वतेन च तदुपदेशानन्तरं तत्फलवर्णनप्रस्तावे सम्मृत्युपाशान्पुरतःप्राणुद्यशोकातिगोमोदते स्वर्गलोके इति तत्फलस्वर्गप्राप्तेस्सकलसंसारपाशान्निवृत्तिपूर्वकत्वेन विशेषितत्वाच्च । यदि हितैषिवचनादिलब्धस्य मुक्तास्तित्वविश्वासस्य दृढीकरणाय विशेषान्तरज्ञानाय च तद्विषयः प्रश्नउपपद्यत इति समर्थ्येत तदा एवमेवमृतास्तित्वविषयप्रश्नोपि समर्थयितुं शक्यत इति प्रेतशब्दरूढ्यामरणं मानप्राहीरित्याद्युत्तरसंदर्भस्वारस्येन च प्राप्तंमृतजीवास्तित्वविषयत्वं त्यक्तुं नयुक्तं इदानीमपि हितप्रियवचनविश्वासेन पारलौकिककर्मानुष्ठाननिष्ठा किमालंबनोदेहात्मवादः कथं च तं निरश्रममितिजिज्ञासमानाद्दृश्यन्ते वेदाध्ययनानंतरं वैदिककर्मानुष्ठानवद्भिः पठितव्येषु शास्त्रेषु देहात्मवादतन्निराकरणनिबन्धनं च दृश्यते

तथापिप्रश्नस्य मृतजीवास्तित्वनास्तित्वविषयत्वेतदस्तित्व-
मात्रमुत्तरे वक्तव्यमिति परमात्मस्वरूपतत्प्राप्त्युपायादिनि-
रूपणं न संगच्छत इतिचेत् न मुक्तजीवास्तित्त्वविषयत्वेन
तदस्तित्त्वमात्रं वक्तव्यमिति तन्निरूपणासाङ्गत्यस्य परप-
क्षेपि तुल्यत्वात् नहि मृतवृत्तान्तविषयेपि त्रयाणां मार्गादि
निरूपणे तत्प्राप्यचन्द्रादिनिरूपणं तत्प्राप्त्युपायनिरूपणं च दृ-
श्यते यद्युत्तरे परमात्मतत्प्राप्त्युपायनिरूपणदर्शनात्तावत्पर्य्यन्तं
मुक्तास्तित्वनास्तित्वप्रश्नस्य तात्पर्य्यं कल्पते तदुत्तरे जीव-
परमात्माभेदनिरूपणदर्शनात प्रेतशब्दस्वारस्याद्यननुरोधेन
मृतास्तित्वनास्तित्वविषयस्यैव ततः प्रश्नस्य तदभेदपर्य्यंत-
मपि तात्पर्य्यंकल्प्यतां अस्ति हि तदभेदनिरूपणमपि यदेवेह
तदमुत्र यदमुत्र तदन्विह मृत्योः समृत्युमाप्नोति य इह-
नानेवपश्यतीत्यादि प्रदेशेषु नच वाच्यं इहदेहे विद्यमानस्या-
मुत्रादित्यमंडलादिस्थानेविद्यमानस्य च परमेश्वरस्यैवनानात्वं
निषिध्यते नतु देहेविद्यमानस्य जीवस्यादित्यमण्डलादौ सतः
परमेश्वरस्य च भेदोनिषिध्यत इति स्थानभेदेन परमेश्वरे
भेदप्रसक्त्यभावात् तथाङ्गुष्ठमात्रः पुरुष इत्यनेन जीवब्रह्मै-
क्यप्रतिपादनानन्तरं विरुद्धधर्मवतोस्तयोः कथमैक्यमिति
शंकायां यथोदकं दुर्गेवृष्टं पर्वतेषु विधावति एवं धर्मान्
पृथक् पश्यन् तानेवानुविधावतीति मंत्रेणजीवे ब्रह्मणि
च पृथग्व्यवस्थिताधर्माअभेदविरोधिनस्संतीति पश्यतस्तयैव
पृथग्धर्मवत्तया संसरोऽनुवर्त्तत इति दोष उक्तः। इत्थमनेन

प्रकारेण जीवपराभेदप्रकरणमिदंनकेवलस्य जीवस्यपरस्य वा प्रकरणमिति सूचयितुमेवपरमात्मपरेण शब्देन प्रकरणिन्युदाहरणीयेपि यदभिन्नतया प्रकरणीप्रतिपिपादयिषितः तत्परेणशब्देन तस्योदाहणं सूत्रकृता कृतं इत्यभिप्रेत्य प्रकरणिविषयमंत्रान्तरोदाहरणसम्भवेपि प्राज्ञोहिप्रकरणादिति सूत्राक्षरानुगुण्येन प्राज्ञशब्दवान्मंत्रोभाष्यकारैरुदाहृतः इत्थमनयोक्तिभंग्यासूत्राभिमतिद्योतनपर्य्यंता जीवपराभेदाभिमतिराविष्कृता तथा प्रथमाधिकरणेपि अयमात्मा ब्रह्मेति श्रुतिरहमिति प्रत्ययेन प्रत्यक्षसिद्धमेवात्मानं ब्रह्मेत्युपादिशति अतः कुतोत्रसंदेह इति शास्त्रविषयत्वाभिमते ब्रह्मणि संदेहाभावोपपादनेन कृतस्य शास्त्रानारंभपूर्वपक्षस्य सिद्धान्ते जीवब्रह्मभेदाभिनिविष्टभाष्यकारांतरवत्तयोर्भेदमव्यवस्थाप्य यदयमात्माब्रह्मेत्यादिश्रुतिरमुमेवाहंकारवद्धंसंसारिणं ब्रह्मेत्यभिधत्ते तत एव संदेहः निरस्तसमस्तोपप्लवकलंकनिरतिशयज्ञानानंदशक्तिमहिमातिशयवत्वं हि ब्रह्मत्वं अनाद्यज्ञानवासनाविर्भावजृम्भितविचित्रकर्मफलभोगानुगुणबहुशरीरप्रवेशनिर्गमव्यापारपरवशनिःसीमतापसहिष्णुत्वं तु जीवत्वं कथमेतयोः परस्परविलक्षणयोरेकभावमाहुःश्रुतयइति संशयः किंनस्यादिति भेदाभेदश्रुतितात्पर्य्यसंदेहापादित विषयसंदेहोपपादनेन जीवब्रह्माभेदाप्रत्याख्यानदृष्टिराविष्कृता किं वहुना भाष्ये ब्रह्मचिच्छक्तेः सकलप्रपञ्चाकारत्वेन तदभिन्नत्वं प्रायः सर्वत्राप्युद्घोषितं तथैव चिच्छक्तेर्ब्रह्माभिन्न-

त्वमपिसर्वत्रोद्घोषितं तत एव जीवब्रह्माभेदः परमसिद्धान्तः सिद्ध्यन् कथं निवारयितुं शक्यते स्यादेतत् चिच्छक्तेः सकलप्रपञ्चाकारत्वं यदुक्तं तद्विशिष्टाद्वैतस्यैवानुकूलं तेन चेतनप्रपञ्चस्येववियदाद्यचेतनप्रपञ्चस्यापितदभेदेनसत्यत्वप्राप्तेः यदिचेतनवर्गस्य चिच्छक्त्यभिन्नत्वेनाचेतनवर्गस्य तद्विवर्तत्वेन च तस्याः सकलप्रपञ्चाकारत्वमुच्येत तदा खलुशुद्धाद्वैतसिद्धिः स्यान्नन्वेवमुक्तं प्रपंचपरिणामितयैव तस्याः सर्वप्रपञ्चाकारत्वं प्रकृत्यधिकरणादिषु व्यवस्थापितंचिच्छक्तेर्ब्रह्माभिन्नत्वं तु नोक्तं यत्रक्वचिदुक्तमप्यौपचारिकं अतएव जन्माद्यधिकरणे भृगुवल्यामानंदोब्रह्मेति सामानाधिकरण्यमौपचारिकमित्युक्तं यः खल्वन्योन्तरआत्मानंदमय इति प्रस्तुत्यसैषानंदस्य मीमांसाभवतीत्यारभ्याभ्यासात् नित्यानंदनिरतिशयशिरस्कत्वेन सएकोब्रह्मण आनंद इति निरूपितः परब्रह्मधर्मत्वेन स एवानदोब्रह्मेति प्रचुरत्वात् ब्रह्मत्वेनोपचर्य्यत इति ब्रह्मचिच्छक्त्योर्भेदस्तु बहुषु स्थलेष्वाविष्कृतः यथा ऽक्षराधिकरणे तावदंबरांतधृतेरिति सौत्रहेतुव्याख्यानसमये एतस्मिन् वल्यक्षरेगार्ग्याकाशओतश्चप्रोतश्चेति गार्गिब्राह्मणश्रुताक्षराकाशशब्दोदितयोर्ब्रह्मचिच्छक्त्योराधाराधेयभावेन भेदआविष्कृतः दहराधिकरणे दहरेस्मिन्नन्तराकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यमिति दहराकाशतदंतर्वर्तितयोक्तयोश्चिच्छक्तिपरब्रह्मणोरासनासनिभावानिर्देशेन भेदआविष्कृतः आकाशोवैनामरूपयोर्निर्वहिता तेयदंतरातद्ब्र

ह्मतदमृतं स आत्मेतिछांदोग्यवाक्यश्रुतस्याकाशशब्दस्याका-
शोर्थांतरत्त्वादि व्यपदेशादित्याधिकरणे चिच्छक्तिपरत्त्वेना-
स्फुटीकृतस्यापि जन्माद्याधिकरणे आकाशशरीरंब्रह्मेति श्रुति-
व्याख्यानावसरेपरप्रकृतित्त्वंचिदाकाशस्य सर्वाणि हवा इमा-
निभूतान्यकाशादेव समुत्पद्यन्ते आकाशोवैनामरूपयोर्निर्व-
हितेत्यादिश्रुतिसिद्धमिति वाक्येन तत्परत्वं स्फुटीकृतमिति त-
त्राकाशशब्दोक्तयोश्चिछक्तिपरब्रह्मणोर्नामरूपनिर्वोढृत्वतद-
संपृक्तत्वनिर्देशेन भेदआविष्कृतः प्रकृत्यधिकरणे चाज्ञानं
विकारास्पदहेयप्रपञ्चरूपेण प्रकृतिभावेन कथं वर्त्तते निरस्त-
समस्तदोषलवकलंकोनिःसीममंगलगुणरत्नाकरोनिरंकुशनि-
त्यसिद्धवैभवः प्रपञ्चातीतः परमशिवइत्याशंकोत्तरत्वेनाव-
तारितस्य परिणामादि सूत्रस्य व्याख्यानावसरे नित्यशु-
द्धानंदस्य निरतिशयमंगलस्वभावस्यापि निमित्तस्य परम-
शिवस्य प्रकृतित्वेन जगदाकारत्वं युक्तमेव चिदचिदाकारेण-
परिणामादिति सौत्रहेतुवचनस्य शब्दार्थं प्रदर्श्यहंतकारण-
विकाररूपोहिपरिणामः पूर्वरूपपरित्यागेन रूपान्तरापत्तिः
परिणामइति कथं परमेश्वरोनर्थधर्मात् परिह्रियत इति
चेदिति तत्र शंकामुद्भाव्ययथानिमित्तस्य प्रकृतित्वेपिनविका
रादिस्पर्शस्तथापरिणामः संभवतीति गूढाभिसंधितयोत्तर-
मुक्त्वा कोयमपूर्वः परिणामः कुतूहलिनोवयं तच्छ्रवणे वि-
विच्यतामिति पुनराकांक्षामुद्भाव्य श्रृणु विवेचयाम इति
तदुत्तरोक्तिं प्रतिज्ञाय यदातमोमंत्रार्थविवरणपूर्वकंशिवस्य

परब्रह्मणः प्रतिज्ञारूपचिच्छक्तिद्वारकः परिणामः सतुनस्वरू-पतोनिर्विकारत्वस्य विरोधीति प्रतिपादनात्तल्लक्ष्यया परि-णामित्वापरिणामित्वव्यवस्थया तयोर्भेद आविष्कृतः तयोरभे-दांगीकारे च चिच्छक्तेरंगीकृतं विकारित्वं ब्रह्मण एवांगीकृतं स्यादिति तस्य विकारत्वसिद्धांतविरोधोपरिहारार्थः तस्मा-त्सार्वत्रिकेणचिच्छक्तेःपञ्चाकारत्वव्यवहारेणनजीवब्रह्माभेद-सिद्धिः क्वाचित्केनानियमाधिकरणाद्युदाहृतलिंगेन तत्सिद्धि-रिति दुराशामात्रं सूत्रारूढतया बहुषु स्थलेषु दूषितस्यार्थस्य क्वाचित्कलिंगदर्शनमात्रेण निर्वोढुमशक्यत्त्वादितिचेत् उ-च्यतेपरिणामित्वादिनिरूपणस्यानियमाधिकरणादि प्रतिप-न्ननिर्विशेषब्रह्मवादाभ्युपगमेन विरोधे हि सति कथंचन मतां-तरानुवादत्वादिकल्प्येत न तु तस्य तेन विरोधोस्ति तथाहि परिणामत्वनिरूपणं विवर्त्तवादस्यानुकूलमेव प्रपञ्चंब्रह्मणि-तत्परिणामत्वप्रदर्शनेन प्रसज्यतत्प्रतिषेधेहि तस्य ब्रह्मविव-र्त्तत्वं सिद्ध्यति अतएव तदैक्षत वहुस्यां प्रजायेयेत्यादिश्रुतौ प्रथमं प्रपञ्चस्य ब्रह्मपरिणामत्वप्रदर्शनं शाङ्करभाष्येपि श्रुत्य-नुसारेण प्रथमं भोक्त्रापत्यधिकरणे प्रपञ्चस्य ब्रह्मपरिणामत्वं प्रदर्श्य तदनन्तरं आरंभणाधिकरेण तत्प्रतिषेधेन तस्य ब्रह्म विवर्त्तत्वमुपपादितं पुनश्चोपसंहाराधिकरणेकृत्स्नप्रसक्त्य-धिकरणे च प्रपञ्चस्य ब्रह्मपरिणामत्ववाद एवसंभावितदोषप्र-तिक्षेपेण बुद्धिसंवादमानीतः संक्षेपशारीरकेपि भाष्यानुसा-रेण परिणामत्वप्रदर्शनस्य विवर्त्तवादानुकूलत्वं प्रपञ्चेन

व्यवस्थापितम्। आरम्भसंहृतिविकारविवर्त्तवादानास्तिक्यवा-
दिजनता खलु वावदीति ॥ आरम्भसंहृतिमतेपरिहृत्यवादौ
द्वावत्र संग्रहपदंनयतेमुनीद्रः१ तत्रापि पूर्वमुपगम्य विकार-
वादंमोन्क्षादिसूत्रमवतार्य्य विरोधनुत्यै ॥ प्रावर्त्तत व्यवहृतेः
परिरक्षणाय धर्मादिगोचरविधावुपयोगहेतोः२साक्षादिहाभि-
मतमेव विवर्त्तवादमाहृत्य सूत्रयति पूर्वमपेक्षमाणः॥आरम्भणा-
दिवचनेन विवर्त्तवादं शक्नोति वक्तुमुदिते परिणामवादे३
आरुह्य भूमिमधरामितराधिरोढुं शक्येतिशास्त्रमपि कारण-
कार्य्यभावम्॥उक्त्वा पुरा परिणतिप्रतिपादनेन संप्रत्यपोहति
विकारमृषात्त्वसिद्ध्यै४विवर्त्तवादस्य हि पूर्वभूमिर्वेदान्तवादे प-
रिणामवादः। व्यवस्थितेस्मिन्परिणामवादे स्वयं समायाति वि-
वर्त्तवादः५ उपायमातिष्ठति पूर्वमुच्चैरुपेयमाप्तुं जनतायथैव॥
श्रुतिर्मुनीन्द्रस्य विवर्त्तसिद्ध्यै विकारवादं वदतस्तथैव६ अहं
प्रजायेय बहुस्स्यां स्यामित्यादिनादौ परिणाममुक्त्वा॥विकार-
मिथ्यात्त्वमथब्रुवन्तंविवर्त्तवादं श्रुतिराननायेत्यादिभिःश्लोकैः
आचार्यैरपि भाष्ये परिणामवादप्रपञ्चनं विवर्त्ताभ्युपग-
मानुकूलतयेत्यस्य ज्ञापकत्वेन सघट इत्यादि प्रत्यक्षस्य प्रप-
ञ्चशून्यत्वविषयताव्यवच्छेदायोपादानतादात्म्यरूपंविषयान्तरं
प्रदर्शितं तस्माद्विवर्त्तवादाभ्युपगमानुकूलतयैव परिणामित्व-
व्यवस्थापनं कृतमिति युक्तमेव ।

यत्तु चिच्छक्तेर्ब्रह्माभिन्नत्वं नोक्तमित्युक्तं तदसिद्धम्
बहुस्थलेषु तदुक्तिदर्शनात् तथाहि आकाशस्तल्लिङ्गादि-

त्यधिकरणे अस्य लोकस्य सा गतिरित्याकाश इति होवाचेति वाक्यप्रतिपाद्यआकाशोभूताकाशोनभवति किंतु परमेश्वर इति सिद्धान्तव्यवस्थापनानन्तरं भूताकाश इति स्ववाक्ये भूतपदग्रहणं किमर्थमिति शङ्कामुद्भाव्य परमाकाशस्य परप्रकृतिरूपस्य भूतकारणत्वसंभवात्सप्रयोजनमिति तस्य फलमुक्त्वा तर्ह्यपरमाकाशस्यापि सर्वभूतकारणत्वसम्भवे अयमाकाशः परमेश्वर इति कथं निर्णय इति पुनः शङ्कामुद्भाव्य तदभेदादित्युत्तरमुक्तं दहराधिकरणेदहरोस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यमिति छान्दोग्याम्नातोदहराकाशः परमेश्वर इति सिद्धान्तव्यवस्थापनानन्तरं य एषोन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशान इत्यादि श्रुत्यन्तरानुसाराद्दहराकाशस्यान्तरुपासनीयः परमेश्वरोभवितुमर्हति कथं दहराकाशः परमेश्वर इत्युक्तमिति शङ्कामुद्भाव्यात्रापिदहराकाशमध्यवर्तीपरमेश्वर उपास्यः किंतु दहराकाशे परमेश्वरधर्माणां अपहतपाप्मत्वादीनां सम्बधप्रतीतेर्दहराकाशमधिवास्यचिदम्बररूपतयेति परिहारः कृतः। सर्वत्रप्रसिद्धोपदेशादित्यधिकरणे ब्रह्मणः सर्वशब्दवाच्यत्वव्युत्पादनावसरे श्रुतिस्मृतीतिहासपुराणाभियुक्तसूक्तिप्रामाण्यात्सकलचिदचित्प्रपञ्चमहाविभूतिरूपा महासंविदानन्दसत्ता देशकालादिपरिच्छेदशून्या स्वाभाविकी परमशक्तिः परब्रह्मणः शिवस्य स्वरूपं च गुणश्च भवति तद्व्यतिरेकेण ब्रह्मणःसर्वज्ञत्वसर्वशक्तित्वसर्वकारणत्वसर्वनि

यन्तृत्वसर्वोपास्यत्वसर्वानुग्राहकत्वसर्वपुरुषार्थहेतुत्वादिकं सर्व-गतत्वं च न सम्भवति किंच महेशशिवमहादेवरुद्राख्याना-मभिधेयत्वं न सम्भवतीतिचेच्छक्तेः परब्रह्मस्वरूपत्वं तस्या-स्तदीयसकलगुणरूपतया तद्धर्मत्वे चोक्तं तथाध्यानाधि-करणेपि चिच्छक्तेर्ब्रह्मस्वरूपाभिन्नत्वं समर्थितं तथाहि आन-न्दादयः प्रधानस्येत्यधिकरणे यं निरतिशयज्ञानानन्दादिगु-णजातं नीलकण्ठत्वादिविग्रहविशिष्टं विग्रहवैशिष्ट्यं च ब्रह्मणः स्वरूपलक्षणं तत्सर्वास्वपि विद्यासु प्रकरणभेदेप्युपसंहार्यं तेन हिब्रह्मविष्ण्वादिसकलेतरविलक्षणं शृङ्गग्राहिकया अनुभवारूढं भवति यथा प्रकृष्टप्रकाशेन सकलग्रहनक्षत्रतारकादिविल-क्षणं चन्द्रमण्डलं अतश्चन्द्रदर्शनेषु सर्वेषु प्रकृष्टप्रकाशानुवृत्तिवत् सर्वासु ब्रह्मविद्यासु ज्ञानानन्दादिगुणविग्रहविशेषानुवृत्तिरु-चितेतिप्रसाधितं तदनन्तरं प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेद इत्यधिकरणे सह ब्रह्मणा विपश्चिता यः सर्वज्ञः सर्वविदित्यादिश्रुतिप्रसिद्धब्रह्मधर्मं निरतिशयज्ञानोपसंहारे तदवान्तरविशेषसत्यसंकल्पत्वाद्युपसंहारवदन्योन्तरआत्मान-न्दमयः तस्य प्रियमेव शिर इत्यादि श्रुतिसिद्धब्रह्मधर्मनिर-तिशयानन्दोपसंहारे तदवान्तरविशेषप्रियशिरस्त्वाद्युपसंहारः कार्य इत्याशङ्क्य प्रियादीनामानन्दविशेषत्वेपि तेषां शिरस्त्वा दिकं विद्याविशेषे ब्रह्मानन्दस्य निरतिशयत्वप्रतिपत्तिसौ-कर्य्यार्थं कल्पितं नतु तात्त्विकं ब्रह्मानन्दस्य तत्वतः शिरः प्रभृतिमत्वे हि क्वचित्स्थौल्यं क्वचित्कार्श्यमित्यानन्दाकार एव

तस्योपचयापचयौ प्रसज्येयातां पुच्छपुच्छवद्भावादीनां तात्विकत्वे भेदश्च प्रसज्यते अतः सर्वज्ञत्वसत्यसंकल्पत्वाप्तकामत्वादयोज्ञानानन्दविशेषा अनपायित्वेन ब्रह्मधर्मिसदृशाः ब्रह्मसादृश्यरूपतया मुक्तप्राप्यफलरूपाश्च तेषामेवासु विद्यासूपसंहारो न प्रियशिरस्त्वादीनामिति प्रसाधितं तदनन्तरमाध्यानाय प्रयोजनाभावादित्यधिकरणे यद्यप्यानन्दमयशब्दोक्तस्य ब्रह्मधर्मस्य निरतिशयानन्दस्य सर्वासु परविद्यासूपसंहारे तदीयप्रियशिरस्त्वादिकं तस्य निरतिशयत्वप्रतिपत्त्यर्थं कल्पितत्वान्नोपसंहार्य्यम्। तथाप्यन्नमयादिकोशचतुष्टयात्परत्वमुपसंहार्यमेव संकल्पितत्वादिति पूर्वपक्षमुद्भाव्य सिद्धान्तितम्। आनन्दमयादिकं विद्यासु नानुसंधेयं प्रयोजनाभावात् न मुक्तिः प्रयोजनं तस्याः सर्वेतरपरित्यागपूर्वकशिवध्यानसाध्यत्वात् किमर्थं तर्ह्यन्नमयादिकीर्तनं आध्यानार्थं आभिमुख्येनादरणेन ध्यानं आध्यानं आदरश्च सर्वोत्कृष्टत्वप्रतिपत्तौ भवतीति तत्प्रतिपत्तिसौकर्यार्थमन्नमयादिकीर्त्तनं अतोभक्त्यतिशयसिद्धिप्रयोजनंसर्वोत्कृष्टत्वप्रतिप [त्तौभवतीतितत्प्रतिपत्तिसौकर्यार्थमन्नमयादिकीर्त्तनं अतोभक्]त्यर्थं दृढभक्त्यतिशयपूर्वकर्त्तव्याद्विद्यानुष्ठानात्प्रागेवोत्कर्षावधित्त्वेनान्नमयादिकमनुसंधेयं नत्वन्नमयादिकं न केवलमुत्कर्षावधित्त्वेनानुसंधेयं किंतु ध्यानकालानुसंधेयान्तरत्वगुणावधित्वेनापि गुणत्वेन निरूपितत्त्वात् अतो दहरविद्यायां ब्रह्मपुरमध्यवर्त्तिदहरपुण्डरीकाभ्यन्तरत्वेन ब-

ह्यानुसंधानार्थं ब्रह्मपुरदहरपुण्डरीकानुसंधानमिवान्नमयाद्य-नुसंधानं ध्यानकाले नियतमिति चेन्न। तेषु प्रतिपर्यायं अन्योन्तर आत्मेत्यात्मशब्दश्रवणात्। यद्यन्नमयादयःशरीरप्राणमनोवधिरूपा अचेतनाः स्युः तदा तेषां ध्यानकाले ब्रह्म-पुरादिवदनुसंधेयता स्यात् नन्वेवं तेह्यन्नाद्यधिष्ठातारोब्रह्म-विष्णुरुद्रेश्वररूपाश्चेतनविशेषाः ये अथर्वशिखायां ब्रह्म-विष्णुरुद्रेन्द्रास्ते संप्रसूयन्त इति शिवसंसृष्टत्त्वेनोक्ताः ये च तदनन्तरं कारणं तु ध्येयः सर्वैश्वर्य्यसंपन्नः सर्वेश्वरश्च शंभुराकाशमध्य इति शिवध्यानं विहाय शिव एकोध्येयः शिवंकरः परित्यज्येति मुमुक्षुकर्त्तव्यनिरन्तरशिवविषयचिन्ता-संततिरूपध्यानकाले परित्याज्यत्वेन ध्यानाद्वहिर्भावनीयत्वे-नोक्ताः कुत इह प्रतिपर्यायं अन्योन्तरआत्मेत्यात्मशब्दात् एवमन्नमयमात्मानमुपसंक्रामतीत्यादिवाक्येषु ब्रह्मप्राप्तेः पूर्वं क्रमप्राप्यदेवताविशेषत्त्वप्रतिपादनाच्च। एवंच यद्यपि यो-वेदनिहितं गुहायामिति श्रुत्युक्तगुहासंनिहितत्वानुसंधान-सिध्यर्थं गुहातद्धद्भाववर्णनार्थं सिद्धोत्कर्षप्रतिपत्यर्थं च तेषामनु-सधानमावश्यकं अतएव ब्रह्मविदाप्नोतिपरमितिश्रुत्युक्तं फलं प्राप्नुवतःतदनुसंधानफलक्रमेण तेषां प्राप्तिरेतमन्नमयमात्मानमितिवाक्येषु श्रूयते तथापि गुहातद्धद्भावकृतोत्कर्षःत्रिपुरसंहरणादिकृतोत्कर्षवदुपासनारंभात्प्रागेवावगन्तव्यःगुहासन्निहि-तत्वानुसंधानोपयोगिनस्तेषामनुसंधानस्य प्रतिदिवसंकार्य-त्वेपि शिवध्यानारम्भात्प्रागेव क्रमेण तेषां प्राप्तिन्यायेन पूर्वं

पूर्वपरित्यागपूर्वकं तदनुसंधानं कार्य्यं सर्वमन्यत्परित्यज्येति परित्यागस्य विहितत्वात्तस्य चोत्तरोत्तरस्मिन्पूर्वपूर्वोपसंहरणेन क्रमकर्तव्यतया शिवागमेषु प्रसिद्धत्वात् योगयाज्ञवल्क्येपि ध्यानाध्याये ब्रह्मादीनां क्रमेणानुसंधानं विधाय तदनन्तरमेतदुक्तं भवत्यत्र गार्गि ब्रह्मविदांवरे ब्रह्मादिकार्यरूपाणि स्वे स्वे संहृत्य कारणे युक्तचित्तस्तदात्मानं योजयेत्परमेश्वर इति तथैव प्रतिपादितत्वाच्च ॥ एवं च शिवध्यानारम्भसमये गुहारूपत्वेन वर्णितामन्नमयप्राणमयमनोमयविज्ञानमयशब्दोक्तान् ब्रह्मविष्णुरुद्रेश्वरान्विज्ञानमयशब्दस्याथर्वशिखायां ब्रह्मविष्णुरुद्रेन्द्रा इतीन्द्रशब्दस्य च शिवागमयोगयाज्ञवल्क्याद्यनुसारादीश्वरसदाशिवोभयपरतया ब्रह्मविष्णुरुद्रेश्वरसदाशिवान्वा क्रमेणानुसंदधान एव पूर्वपूर्वमुत्तरोत्तरस्मिन्सदाशिवं शिवासनरूपे परव्योम्नि च विलीनभावयित्वा परमव्योमवर्त्तिशैवकविषयचित्तसंतातिरूपंध्यानंकार्य्यं नतुशिवध्यानकालेतस्यअन्नमयाद्यन्तरत्वमपिध्यातव्यंनन्वेवंसत्युमासहायत्त्वमपि तस्य ध्यातव्यं न स्यात् सर्वेतरपरित्यागविधिविरोधात् सर्वमन्यत्परित्यज्येत्यन्यशब्देनैव प्रकृतब्रह्मविष्णुरुद्रेन्द्रग्रहणसंभवे अधिकस्य सर्वशब्दस्य शिवेतरपरित्यागविध्यर्थत्वात्॥नचानन्दमयशब्दोक्तचिच्छक्त्यात्मिकाया उमायाः शिवाभिन्नत्वात्परित्यागविधेर्नतद्विषयत्वप्रसक्तिरितिवाच्यं अन्नमयादिषु श्रुतस्यात्मशब्दस्य आनन्दमयेप्यविशेषेण तद्वदानन्दमयात्मनोपि जीवत्वं

चित्यादिति चेत् मैवं यत आनन्दमयं आत्मग्रहणं परमात्मविषयं नत्वन्नमयादिष्विवजीवात्मविषयं उत्तरत्रानन्दमयादिकमुपक्रान्तस्यैवानन्दमयआत्मग्रहणंपरमात्मविषयंनत्वन्नमुपसंक्रान्तस्योपसंक्रमितव्यान्तरोक्तभावेन तत्प्राप्तेर्मुक्तित्वावगमात् तथाचात्मजीवे धृतौ देहे स्वभावे परमात्मनि इतिजीवपरसाधारणत्वेनानुशिष्टस्यात्मशब्दस्य यथार्हमर्थग्रहणं युक्तं नचानन्दवल्यामात्मशब्दस्य जीवविषयत्वं नियतं दृष्टमिति प्रायपाठः शङ्कनीयः आत्मन आकाशः संभूत इत्यत्र जगत्कारणविषयस्य तस्य जीवविषयत्वायोगेन परमात्मविषयत्वस्यावश्यवक्तव्यतयातद्वदानन्दमयेति तस्य परमात्मविषयत्वोपपत्तेः प्रायपाठबाधकस्य लिङ्गस्योभयत्राप्यविशेषात्तस्मादुमायाः शिवाभिन्नत्वात्तद्ध्यानकाले तदनुसंधानं न विरुद्ध्यते। नत्वेवमानन्दमयशब्दोक्तायाः सकलचेतनाचेतनप्रपञ्चाकारत्वेनाभ्युपगतायाः शक्तेः शिवाभेदेन तदभिन्नानां सर्वेषामपि चेतनानां शिवाभेदस्यानिवारणीयत्वात् अन्नमयादिशब्दोक्तानां ब्रह्मादीनां पूर्वापरवाक्ययोः परमात्मपरतया कॢप्तेनात्मशब्देनान्वयादपि शिवाभेदप्रतीतेः तेषामप्युमावदेव शिवध्यानकालेऽनुसंधानमविरुद्धमिति चेत् न शिव एकोध्येयः शिवंकरः सर्वमन्यत्परित्यज्येतिशिवस्यैव ध्येयत्वावधारणात् तस्यावधारणस्य प्रकृतब्रह्माद्यविषयत्वे हि कस्तस्य विषयःस्यात् न अचेतनवर्गःप्रकृतब्रह्मादिव्यतिरिक्तचेतनवर्गोवाअन्यशब्दस्यसर्वनाम्नःसर्वशक्तिस्वाभाव्यादि-

श्लोकानिचद्वेदोपि .. निर्विधाय तदनन्तरमाम्नाते समानमिति तच्छेनेनेति वाक्ये श्रुतस्येतरशब्दस्य प्रतियोगिभूतेषु वैशेषिकाङ्गसादृश्येन वैशेषिकाङ्गपरत्ववत् प्रतियोगिभूतचेतनान्तरपरत्वस्य तत्रापि बुद्धिस्थब्रह्मादिचेतनपरत्वस्य चावश्यंभावात् सर्वशब्दसमभिव्याहारानुसारेणाचेतनान्तरसाधर्म्येपि बुद्धिस्थस्यब्रह्मादिपरत्वस्यावर्जनीयत्वात्चेतनान्तराणामपिब्रह्मादिवच्छिवाभिन्नत्वेन तद्विषयत्वेप्यनुपपत्तितौल्याच्च तस्माद्वस्तुतः शिवाद्भिन्नस्य चेतनस्य परित्यागोत्र न विधेयः किंतु शिवाद्भेदेन प्रतीयमानस्यातएव ब्रह्मविद्यादौ शिवोहमस्मीति शिवाभेदेनानुसंधेयस्य स्वात्मनो न परित्यागइति पर्यायमन्योन्तर आत्मेति श्रवणादन्नमयादीनां शिवात्परस्परस्माच्च भेदप्रतीतेरनिवार्य्यस्तेषां परित्यागः। उमायास्तु यद्यपि परमेव्योमन्नित्यासनासनिभावेन स एकोब्रह्मण आनन्दइति धर्मधर्मिभावेन च भेदः प्रतीयते तथाप्यासनरूपेण निरतिशयानन्दरूपेण च सा भेदप्रतीतिर्नत्वम्बिकात्मकचेतनरूपेण तेनतद्रूपेणाभेद एव प्रतीयते पुरुषं कृष्णपिङ्गलमिति तस्य सर्वविद्यासूपसंहृतेरानन्दाधिकरणे समर्थितत्वेन तत्रकृष्णपिङ्गलमित्यनेनशिवस्यैवाम्बिकामूर्त्याकृष्णवर्णत्वंपुरुषमूर्त्यातू सर्ववर्णत्वमितिशिवशक्त्यभेदगर्भीकरणात् तस्मादुमाया इव शिवध्यानकाले नान्नमयादीनामनुधानं कार्यमित्येवमेतदधिकरणमाध्यमाएवप्रयोजनाभावात् आत्मशब्दादात्मगृहीतिरितरवदुत्तरादन्वयादितिचेत् स्यादवधारणादिति चतुर्भि

सूत्रैः प्रवर्त्तितं तत्रानन्दमयरूपा चिच्छक्तिः परमात्मा शिव एव न ततोभिद्यत इत्ययमर्थान्तरतृतीयसूत्रत्वेनाचार्यैर्भाष्ये वर्णितम् ।

नच तद्भाष्यमानन्दमयः परमात्मा शिव इत्यानन्दमयाधिकरणप्रथमपक्षमाश्रित्यानन्दमयस्य परमात्मत्वसाधनपरं, नत्वानन्दमयश्चिच्छक्तिरितितदाधिकरणद्वितीयपक्षमाश्रित्य चिच्छक्तेः परमात्माभेदसाधनपरमिति वाच्यम् । प्रथमपक्षाश्रयणेआनन्दमयःपरमात्मेत्यस्यार्थस्यानन्दमयाधिकरण एव सिद्धत्वेनात्र तत्साधनस्यानपेक्षितत्त्वादानन्दमयाधिकरणे द्वितीयपक्ष एव भाष्यकाराभिमत इति जन्मादिसूत्रेण स्पष्टमवगतत्त्वाच्च । तस्मादाध्यानाधिकरणे भाष्यकारैः शक्तेः शिवाभेदः प्रसाधित इत्येतत्समञ्जसमेव ॥ तथाहीक्षतिकर्मव्यपदेशात्स इत्यधिकरणेऽपि शिवाभेदोवर्णितस्तत्र ह्येतद्वै सत्यकामपरं चापरं च ब्रह्म यदोङ्कार इत्यादौ सत्यकामप्रश्नोत्तरसंदर्भे एकमात्रप्रणवोपासनस्य तत्प्रथमात्मकचित्प्रापणीयमनुष्यलोकप्राप्तिफलं, द्वितीये तु प्रणवोपासनस्य द्वितीयमात्रयजुःप्रापणीयान्तरि(क्ष)लोकप्राप्तिफलं चाभिधाय यदाम्नायते यः पुनरेतं त्रिमात्रेणोङ्कारेण परं पुरुषमभिध्यायीत यथा पादोदरः त्वचा विमुच्यते एवं हवै स पाप्मनाऽथनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परं पुरिशयमीक्षत इति तत्र ब्रह्मलोकः परब्रह्मणः शिवस्य लोकः तस्मिन्नीक्षणीयः पुरुषः शिव इति सिद्धान्ताभिमतः तदर्थमिह ब्रह्मलोकोविष्णुलोकः

९

ऋग्भिरन्तं यजुर्भिरन्तरिक्षं सामभिर्यत्तत्कवयोवेदयन्त इत्युक्त्वा ऽर्थसंग्राहके तदनन्तरमन्त्रे तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय इति मन्त्रेण विष्णुलोके प्रतिपन्नस्य विद्वदनुभवविषयत्वस्य तस्मिन् ब्रह्मलोके प्रत्यभिज्ञायमानत्वात्, अतस्तस्मिन्नीक्षणीयः पुरुषोविष्णुरेवेति पूर्वपक्षमुपन्यस्य सिद्धान्ते तदनुवादपूर्वकं तस्मिन्निरास इत्थं कृतः, यदुक्तं तद्विष्णोः परमं पदमिति तत्र प्रपञ्चाकारत्वमन्तरेण यं निरतिशयानन्दस्वभावं विष्णोः परमं पदं रूपं तदेव शिवाभिधेयं परब्रह्मेत्यविरोधः। यतोविष्णुशिवयोरुपादाननिमित्तमन्तरेण स्वाभेदमन्तरेण स्वरूपभेदोनास्तीति। अत्र शिवलोके तद्विष्णोरिति मन्त्रार्थप्रत्यभिज्ञानसंघटनार्थं तस्य मन्त्रस्य शिवलोकविषयत्वमेव वक्तुं युक्तं न तु शिवविषयत्वम् । अतएव सोऽध्वनः पारमाप्नोति तद्विष्णोःपरमं पदमिति कठवल्लीमन्त्रस्य शिवलोकविषयत्वं कार्य्यं वादरिरस्य गत्युदिरि?त्यधिकरणभाष्ये वर्णितम् तद्विष्णोरिति मन्त्रस्य एतद्भाष्यदर्शितार्थावलम्बनेन शिवविषयत्त्वमुपपादायितुमप्यशक्यम्। नहि प्रपञ्चाकारेणावस्थितस्य विष्णोः शिवः साक्षात्स्वरूपमिति भाष्यकारसिद्धान्तः, किं तु शिवशक्तिरूपः परमानन्दः तस्य साक्षात्स्वरूपमिति तस्य शिवशक्त्यवस्थारूपत्वमेव हि प्रकृत्यधिकरणभाष्यादिषु प्रतिपादितम्। तस्मादित्थमस्य भाष्यस्यार्थो वर्णनीयः-प्रपञ्चाकारत्वमन्तरेण यन्निरतिशयानन्दस्वभावं विष्णोः परमं पदं रूपमित्यनेन जगदाकारपरिणतविष्ण्ववस्थाप्रकृतिभूता चिच्छक्ति

रुच्यते सैत्र परमशिवलोकतयाऽपि वर्त्तत इति, तेन तद्विष्णो-रिति मन्त्रस्य शिवलोकविषयत्वं दर्शितं भवति तदेव शिवाभिधेयं परं ब्रह्मेति तस्याः शिवस्वरूपाभिन्नत्वमुच्यते।

ननु प्रत्यभिज्ञानाविरोधसंघटनार्थं तद्विष्णोरिति मन्त्रस्य शिवलोकाकारतापन्नचिच्छक्तिविषयत्वमात्रं वक्तव्यं चिच्छक्तेः शिवस्वरूपाभिन्नत्ववचनं तत्र नोपयुज्यत इत्याशङ्क्य शङ्काविशेषनिरासेन तदुपयोगं सूचयितुं यतोविष्णुशिवयोरित्यादिवाक्यम्। इयमत्र शङ्केति विष्णोः परमं रूपं शिवशक्तिरित्ययुक्तं पुराणेतिहासेषु विष्णोः शिवाभिन्नत्वस्यैव वहुधा प्रतिपादितत्वादिति तत्रायं परिहारोऽनेन वाक्येन सूचितः, यतो विष्णोः शिवात्स्वरूपभेदो नास्ति तत एव विष्णववस्था प्रकृतिभूतायाः शक्तेरपि शिवात्स्वरूपभेदोनेष्यते कूर्मपुराणादिषु सकलवेदान्तप्रतिपाद्यं सर्वकारणं मुक्तप्राप्यं परं ब्रह्म विष्णोरेव रूपमिति विष्णोः परमं पदमिति विष्ण्वाख्यं परमं पदमिति च तत्र तत्र प्रतिपाद्यते-यथा महाभारते मोक्षधर्मे नारदोपाख्याने श्रूयते, नारदो हिमवत्पार्श्वे कांचन कन्यां, तस्या जृम्भणसमये तन्मुखान्निर्गतांस्त्रीन् विन्दुचिताङ्गानादित्यसदृशाकारं शिरसा मणिं धारयतः पुरुषान् तां प्रदक्षिणीकृत्य पुनरपि तामेव प्रविष्टांश्च दृष्ट्वा प्रणम्य सविनयं का त्वं के ते त्रयः पुरुषाः तेषां गात्रेषु विन्दवः के मूर्द्धसु ज्योतिः किमिति पृष्टा। सावित्र्यहं ते पुरुषा स्त्रयो वेदाः तद्गात्रेषु विन्दवः यज्ञतत्फलरूपाः वेदार्था मूर्द्धसु

ज्योतिः वेदान्तप्रतिपाद्यं दिव्यं किमपि महज्ज्योति स्तत्तु मयापि दुर्विज्ञानमित्युक्तस्तज्ज्योतिः किमिति निर्णयार्थं वर्षशतं भगवन्तं विष्णुमाराध्य ततः प्रसन्नं पुरस्तादाविर्भूतं भगवन्तमालोक्य सहर्षं प्रणम्य "विवक्षितं जगन्नाथ मम ज्ञातं त्वयाऽच्युत ॥ तत्प्रसीद जगन्नाथ श्रोतुमिच्छामि तद्धरे" इति पृष्ट्वा, यत्सत्यं मम रूपन्तद्वेदानां शिरसि त्वया । निर्द्वंद्वा निरहंकारा यतयः शुद्धलोचनाः ॥ तान्पृच्छ यदि चेच्छसीत्येवं भगवन्तोपदिष्ट इति तत्र ममरूपमित्यभेददृष्ट्या शिवस्वरूपमेवोच्यते । अत एव मम रूपमित्युक्त्वापि तत्र प्रष्टव्यरहस्यांशसद्भावमभिप्रेत्य तान्पृच्छेत्युक्तम् । अत एव च पश्य मे योगमैश्वरमिति परमं रूपमिति गीतासु भगवता स्वं कीर्त्तनप्रदृश्यमाने रूपे स्वयमेवैश्वरत्वविशेषणं दत्तम् । एवं परमेश्वरस्य चिच्छक्तिसद्भावः तस्याः परमेश्वराभिन्नत्वं तथात्वेपि तस्यास्तद्धर्मत्वमित्येतत्सर्वमद्वैतप्रधानेपि शास्त्रे निरूपितम् । तथा संक्षेपशारीरके' चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते, सत्यैवास्य जटा परा भगवतः शक्तिस्तु विद्योच्यते ॥ संसर्गाच्च मिथस्तयोर्भगवतः शक्त्योर्जगज्जायते, स च्छक्त्या सविकारया भगवतश्चिच्छक्तिरुद्गीयते ।१। इत्येवं कथयन्ति केचिदपरे श्रद्धालवः तत्पुनः, कस्यांचिद्भुवि संमतं च विदुषां नेष्टं च भूम्यन्तरे ॥ कर्मोपास्तिप्रधानभूमिषु तथा तत्संमतं निर्गुणे, तत्रैतत्परवेदवाक्यविषयेत्वालोकि तेनेष्यते ।२। इति । एवं पञ्चपादिकायामप्यानन्दो विषयानुभवो नित्यत्वं चेति सन्ति

धर्माः अपृथक्त्वेपि चैतन्यात्पृथगिव भासन्त इत्युक्त्या अयमेवार्थः सूचितः । एवं स्वरूपाभिन्नाया एव चिच्छक्तेर्व्यवहारदशायां धर्मत्वमप्यस्तीति गार्गिब्राह्मणदहरविद्यादिषु धर्मधर्मिभावादिभेदनिर्देशोपि युज्यत एव ।

यत्तु जन्मादिसूत्र एवानन्दो ब्रह्मेति प्रचुरत्वाद् ब्रह्मत्वेनोपचर्यत इत्युक्तं तत्प्रागानन्दवल्यां स एको ब्रह्मण आनन्द इत्यानन्दं ब्रह्मणो विद्वानिति च ब्रह्मधर्मत्वेनोक्तत्वाद्व्यावहारिकधर्मत्वोक्तिप्रकरणे सामानाधिकरण्यमौपचारिकं नेतव्यमित्यभिप्रायेण, न तु सर्वथैवाभेदाभिप्रायेण। एवं तद्गुणसारत्वात्तु तत् व्यपदेशः प्राज्ञवदितिसूत्रे धर्मज्ञानवाचकशब्दानां धर्मिण्यौपचारिकत्वोक्तिरपि नेतव्या। एवं च ब्रह्मचिच्छक्तेः सकलचिदचित्प्रपञ्चाकारत्वं तस्या एव ब्रह्मस्वरूपत्वं तदीयसकलगुणरूपत्वं ब्रह्मणोनिर्विकारत्वमित्यर्थचतुष्टयं आचार्यैरभ्युपगतं निर्गुणं निःप्रपञ्चं जीवाभिन्नं शुद्धाद्वैतरूपं ब्रह्मेति तेषां परमसिद्धान्त इत्यमुमर्थं दृढमवगमयत्येव, तथाहि चिच्छक्तेर्ब्रह्माभेदे तस्या एव तदीयसकलगुणात्मत्वे च ब्रह्मणः स्वभिन्नगुणा न सन्ति किं तु स्वयमेव कल्पितभेदेन गुणवदप्यवभासते वस्तुतो निर्गुणमेव ब्रह्मेत्येतत्तावत् सिद्ध्यति। नह्यभेदे मुख्योगुणगुणिभाव उपपद्यते, न चाभेदवन्मुख्यो गुणगुणिभावोपपादको भेदोप्याचार्यैरङ्गीकृत इति वक्तुं शक्यते, आरम्भणाधिकरणभाष्यादिषु विरोधेन भेदाभेदपक्षस्य प्रतिक्षिप्तत्वात्। नच मध्वमत इवाचार्याणां मतेऽपि गुण-

गुणिनांभेदाभावेपि भेदप्रतिनिधिर्विशेषोभ्युपगतोस्ति नवा तेनापि मुख्यगुणगुणिभावनिर्वाहः,तस्य माध्वैरपि भेदकार्य्य-व्यवहारमात्रनिर्वाहकतया ऽभ्युपगतत्वेन ततोभेदावभासतद-भिलापमात्रसिद्धेः विशेषस्य भेदनिर्वाह्यसकलकार्यनिर्वा-हकत्वे विशेष इति पर्य्यायेण भेदस्यैवाङ्गीकारापत्तेः । अत एवानुव्याख्यानाख्ये मध्वग्रन्थे भेदोनाशे भवेत्तथेति "सत्सुत न्तुषु विनश्यतां पटादीनां तन्तुभ्यो भेदे ऽभ्युपगते तद्व्याख्याने न्यायसुधायां यथाभेदसाधकानां व्यपदेशभेदादीनां विशे-षाश्रयणेनैवान्यथासिद्धिरुक्ता तथा सत्यपि तस्मिन्नसत्व-स्यापि विशेषेणैव निर्वाहः क्रियतां किं भेदाभ्युपगमेनेति शङ्कां कृत्वा विशेषस्य भेदकार्यव्यवहारमात्रनिर्वाहकत्वेना-सत्वं प्रत्यनिर्वाहकत्वात । सकलभेदकार्यकारित्वे विशेषोभेद एव स्यान्न तत्प्रतिनिधिः स्यादिति परिहारः कृतः। तस्मा-द्गुणविषये तावदपृथक्त्वेपि चैतन्यात्पृथगिवावभासन्त इति पञ्चपादिकोक्तपक्ष एवाभिमत इत्येतत्सुदृढमेव। तथा सकल-प्रपञ्चाकारायाश्चिच्छक्तेर्ब्रह्माभेदाभ्युपगमेन वेदादिप्रपञ्च-स्तद्विवर्त्त इति सिद्ध्यति। अन्यथा वियदादेरनित्यस्य तत्प-रिणामत्वाभ्युपगमे तदभिन्नस्य ब्रह्मणोनिर्विकारत्वाभ्युप-गमविरोधापत्तेः ।

ननु ब्रह्मचिच्छक्त्योस्तात्त्विकाभेदेपि गार्गिब्राह्मणदह-रविद्यानन्दवल्यादिसिद्धस्य धर्म्मधर्मिभावासनासनि-भावादेर्निर्वाहार्थं व्यावहारिकोभेदोप्यवश्यमभ्युपगन्तव्यः

इति ततएव चिच्छक्तेः परिणामित्वाभ्युपगमेपि ब्रह्म-
चिच्छक्त्योर्निर्विकारत्वसविकारत्वव्यवस्था घटते जीवब्रह्म-
णोरभेदेपि कर्तृत्वभोक्तृत्वादितदभावव्यवस्थावदिति चेत
तथापि परममुक्तिदशायां व्यावहारिकभेदनिवृत्त्या जीवग-
तकर्तृत्वभोक्तृत्वादिवद्वियदादिप्रपञ्चस्यानिवृत्तेरवश्यं वक्त-
व्यत्त्वात्। तस्य ब्रह्मविवर्त्तत्त्वसिद्धिरनिवार्या। तस्मात्संक्षप-
शारीरकोक्तरीत्या भाष्ये परिणामवादालम्बनं व्यवहारदृष्टौ
कर्मोपासनादिनिर्वाहार्थं तत्त्वदृष्टौ प्रतिषेधापेक्षितप्रसक्त्यर्थं
चेति ब्रह्मणो निःप्रपञ्चत्वपक्ष एवाभिमत इत्यपि सुदृढम् ।
चिच्छक्तेः सकलाचेतनप्रपञ्चाकारत्ववत्सकलचेतनप्रपञ्चाका-
रत्वस्याप्युक्तत्वेपि चेतनप्रपञ्चस्य वियदादिवत्तद्विवर्त्तत्त्वं न
सिद्ध्यति, तथा सति तस्य तत्त्वज्ञानान्निवृत्या मुक्तिफलभा-
क्त्वाभावप्रसङ्गात्। अनित्यस्य तस्य ब्रह्माभेदे ब्रह्मनिर्विका-
रत्त्वविरोधप्रसङ्गात् । ननु प्रकृत्यधिकरणे परिणामादिति सूत्रं
चिदचिदाकारेण परिणामादिति व्याख्यातं परिणामत्वोक्तौ
च विवर्त्तवादः स्वयमेवापततीत्युक्तं सत्यम् तथापि चिदंशे
परिणामत्वोक्तिचिद्वर्गस्य ब्रह्मचिच्छक्तिनित्यावस्थात्वमात्रप-
रा चिद्वर्गस्यापि स्वस्वचिच्छक्तिद्वारा ज्ञानसुखसंकोचविका-
सादिपरिणामोस्तीति तदभिप्रायोवा यतः स्वरूपतश्चिद्वर्गस्य
नित्यत्वं व्यवस्थापितं नात्मश्रुते नित्यत्वाच्च ताभ्य इत्य-
धिकरणे तस्मान्निर्गुणं निष्प्रपञ्चं जीवाभिन्नं शुद्धाद्वैतरूपं
ब्रह्मेतीत्याचार्याणामभिमतमित्येतत्सुदृढमेव ।

नन्वेवं व्यवहारदशायां मुक्तिदशायां चाचार्याणां मतस्याद्वैतवादिमताविशेषे किमर्थं पृथग्भाष्यारम्भ इति चेत् उच्यते निर्विशेषब्रह्मसाक्षात्कारात्खलु ब्रह्मभावाप्तिस्तत्साक्षात्कारश्च तन्निदिध्यासनलभ्यस्तस्मिन्नतिसूक्ष्मे निदिध्यासनयोग्यं बुद्धिस्थैर्यं येन लभन्ते तेषां तत्र बुद्धिस्थैर्यं दृढभक्तिपूर्वकचिरनिरन्तरोपासनाऽऽराधितस्यानन्तकल्याणदिव्यविग्रह - विशिष्टस्य तस्यैव प्रसादाल्लभ्यं स नो बुद्ध्या शुभया संयुनक्त्विति श्रुतेः, ईश्वराद्ज्ञानमन्विच्छेदिति स्मृतेश्च। अतएवाहुः खण्डनकाराः, ईश्वरानुग्रहादेषां पुंसामद्वैतवासना । महाभयकृतत्राणा द्वित्राणां यदि जायत, इति ईश्वरप्रसादश्च तदुपासनालभ्यः। 'यद्यान्तरोपचारेण नरः स्त्रीषु प्रसीदति, तथान्तरेण ध्यानेन प्रसीदति महेश्वर इति पुराणवचनात् । अतश्चिरकालं तदेकनिष्ठतोपयोगिभक्त्यातिशयसिद्धये तदेव परं ब्रह्म नातः परमस्य तात्त्विकरूपमस्तीति प्रतिपादयद्भिराचार्यैस्तदानुगुण्येन वेदान्तवाक्यानां ब्रह्मसूत्राणां च योजनाप्रदर्शनार्थमिदं भाष्यं प्रवर्त्तितम्। ननु तस्मिन्भक्त्यतिशयसिद्ध्यर्थं श्रुतिस्मृतिपुराणप्रतिपन्नतदीयमहिमविशेषप्रख्यापनमेव युक्तं न तु ततः परस्य वस्तुतो न्यायानुगृहीतवेदान्तार्थत्वेन स्वाभिमतस्य महापुरुषार्थप्राप्त्यर्थमवश्योपादेयस्य तदीयरूपान्तरस्य दूषणमिति चेदुच्यते । पूर्वेषामपि ऋषीणामियं शैली दृष्टा यत्पूर्वं कस्यचिदनुष्ठाने न यत्राधिकारः प्राप्यः तत्र पूर्वानुष्ठानेन दृढाधिकारसिद्ध्यर्थं तत्रानभिमतश्रुतिन्यायवि-

रोधेन दूषणं प्रदर्श्य तत्र पुरुषस्य प्रथमप्रवृत्तिं निरुद्ध्य पूर्वानुष्ठेये व्यवस्थापनम्, यथा कल्पसूत्रे श्रुतिस्मृतीविरोधप्रदर्शनेन संन्यासं दूषयित्वा तत्र प्रथमप्रवृत्तिं निरुद्ध्य तदाधिकारि विशेषणदृढवैराग्योपयोग्यन्तःकरणशुद्ध्यर्थं तदीयकर्मानुष्ठानवतो गार्हस्थ्यस्य प्रशंसनेन तत्राधिकारिविशेषव्यवस्थापनम्। तथाह्यापस्तम्बाचार्य्यैरथ पुराणे श्लोकावुदाहरन्ति "अष्टाशीतिः सहस्राणि ये प्रजामीषिर? ऋषयः॥ दक्षिणेनार्यम्णः पन्थानं ते श्मशानानि भेजिरे॥ अष्टाशीतिः सहस्राणि ये प्रजान्नेषिर? ऋषयः॥ उत्तरेणार्यम्णः पन्थानं ते ऽमृतत्त्वं हि कल्पत" इति इत्यूर्ध्वरेतसां प्रशंसा। अथापि सङ्कल्पसिद्धयो भवन्ति यथावर्षं प्रजादानं दूरे दर्शनं मनोजवता यच्चान्यदेवं युक्तं तस्माच्छ्रुतितः प्रत्यक्षफलत्वाच्च विशिष्टानाश्रमानेतानेके ब्रुवते त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयःकपालपत्नीसम्बन्धान्युच्चैर्नीचैः कार्यमिति तैर्वृद्धाचारोप्रमाणमिति मन्यन्ते। यत्तु श्मशानमुच्यते नाना कर्मणामेवान्ते पुरुषसंस्कारो विधीयते अतः परमानन्दात्मफलं स्वर्गशब्दं श्रूयते, अथाप्यस्य प्रजातिमृतमाम्नाय आह प्रजामनुप्रजायसे तदु ते मर्त्यामृतमित्यथापि स एवायं विरूढः पृथक् प्रत्यक्षेणोपलभ्यते दृश्यते वापि सारूप्यं देहत्वमेवान्यत् ततशिष्टेषु कर्मसु वर्त्तमानाः पूर्वेषां संपरायेण कीर्त्तीयस्वर्गं च वर्द्धयन्त्येवमवरोवरः परेषामाभूतसंप्लवात्ते स्वर्गजितः पुरः सर्गेऽध्यजा-

र्यां भविष्यन्तीति भविष्यत्पुराणम्। अथापि प्रजापतेर्वचनं त्रयीं विद्यां ब्रह्मचर्यं श्रद्धां तपो यज्ञमनुप्रदानं य एतानि कुरुते तैरिदत्सुहातिस्मारजो भूत्वा ध्वंसतेऽन्यत्प्रशंसं निमित्तत्रये पापकृतस्तएव ध्वंसन्ति नापरा हिंसति यथार्णवनस्पतेर्नास्यास्मिन्लोके कर्मभिः सम्बन्धो विद्यते तथा परस्मिन्कर्मफलैस्तदा तेन वेदितव्यं प्रजापते ऋषीणामिति सर्गोयम् ।

ननु ये पुण्यकृतस्तेषां प्रकृतयः पराज्वलंन्त्य उपलभ्यन्ते तत्तु कर्मावयवेन तपसा वा कश्चित्सशरीरोन्तव्यं लोकं जयति सङ्कल्पसिद्धश्च स्यात् नतु तज्ज्यैष्ठ्यमाश्रमाणामिति महता यत्नेन पूर्वोत्तरपक्षाभ्यां संन्यासस्य यज्ञादिकर्मविधायकसकलवेदविरुद्धत्वेनाप्रामाणिकत्वं प्रदर्श्य गृहस्थस्य श्मशानभाक्त्वदूषणं, अमृतत्त्वाभावकृतं न्यूनत्वं श्रुतिन्यायाभ्यां परिहृत्य प्रजापतिवचनोदाहरणे आश्रमान्तरं सर्वात्मना निन्दित्वा पुत्रपौत्रादिकृतसत्कर्मभिः पित्रादीनां स्वर्गोस्ति चेत्तत्कृतदुष्कर्मभिस्तेषां नरकोपि स्यादिति शङ्कां युक्त्या परिहृत्य सङ्कल्पतपःसिद्धित्वादिकं कर्म तपःसाध्यं गृहस्थेनान्येन वा येनकेनापि संपादयितुं शक्यमित्याश्रमान्तरस्य तत्कृतमुत्कर्षमप्युपास्य यज्ञादिकर्मानुष्ठानवतोगार्हस्थ्यस्य प्रशंसनेनादृढवैराग्याणां संपदाधिकारिणां अन्तःकरणशुद्ध्या क्रमेण दृढवैराग्यसिद्ध्यर्थं गार्हस्थ्ये तद्व्यवस्थापनं कृतं तेषु सूत्रेषु।

अथापीत्यस्यापि चेत्यर्थः । अमृतत्वं हिकल्पत इत्यमृतत्वाय कल्पन्त इत्यर्थः। अनन्तं स्वर्ग्यमिति यकारोयमनश्छा-

न्दसः,देहत्वमेवान्यादिति देह एवान्य इत्यर्थः। ते स्वर्गजितः स्वर्गे वीजार्था भवन्तीति पुत्रपौत्रादिकृतैः पारलौकिकैः सत्कर्मभिराप्रलयं स्वर्गं लब्धवन्तः ते पुनः सर्गादौ जगत्सृष्ट्यर्थाःप्रजापतयो भवन्तीत्यर्थः।तैरित्सह तैरेव सह वसामः त्रैविद्याध्ययनादिमतामेवास्मल्लोकप्राप्तिरित्यर्थः। नास्यास्मिल्लोक इति,अस्येत्येकवचनं वह्वर्थे।येषां पुत्रादीनामिहलोके पुत्रादिकृतै र्दुःकर्मभिःपरलोके तत्फलैश्च सम्बन्धो नास्तीत्यर्थः।अत्र तैर्विरुद्धआचारो ऽप्रमाणमिति संन्यासाश्रमस्य मूलप्रमाणराहित्यवचनं तस्य प्रत्यक्षसौवालादिश्रुतिसिद्धत्त्वादयुक्तं स्वयं च प्रागापस्तम्बाचार्यैः चत्वार आश्रमाः गार्हस्थमाचार्यकुलं मौनं वानप्रस्थमिति तेषु यथोपदेशं, अव्यग्रं वर्त्तमानः क्षेमं गच्छतीत्याश्रमान्तराणामपि सद्भावोऽङ्गीकृतः। यथोपदेशमित्युक्त्या सर्वेष्वपि मूलप्रमाणमप्यङ्गीकृतं गार्हस्थ्याद्युत्क्रमणेनैव चतुष्ट्वे सिद्धे चत्वार इत्युक्तमैकाश्रम्यपक्षनिराकरणार्थम्। एवं स्ववचनविरुद्धं चेदं तैर्विरुद्ध आचारो अप्रमाणमिति वचनं ततः परमनन्त्यं फलं स्वर्गशब्दं श्रूयत इति यदुक्तं तदपि काशकुशावलम्बनम्। तथाभूतश्रुतिवाक्य सद्भावे तस्याक्षयं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिवदर्थवादमात्रत्वादेतेन प्रजामनुप्रजायसं इत्यादिश्रुतिवाक्यान्तरोदाहरणमपि व्याख्यातम्। पितापुत्रयोरैक्ये युक्त्युदाहरणं त्वतिमन्दं नहि देहयोः सादृश्यमात्मा भेदानियतं तथा पुत्रादिदुष्कर्मभिः पित्रादीनां नरकाद्यभाववचन-

मपि पितृभिः सह मज्जन्तीत्यादि वचनविरोधाच्चिन्त्यम् ।प्रजा-पते ऋषीणामित्यादियुक्तिस्तु "तेषां तेजोविशेषेण प्रत्य-वायो न विद्यत" इति स्वयमेवापस्तम्बाचार्य्यैः प्राक् कृता । इदं सर्वमापस्तम्बाचार्य्यैरज्ञानेनाऽऽग्रहेण वा नोक्तं किंतु संन्या-सफलश्रवणमात्रसन्तुष्टाः मन्दाः तदुचितदृढवैराग्याभावेपि हठात्प्रवृत्ताः पुनर्निर्वोढुमशक्नुवन्तः पतेयुः ते तथा मापतन्तु, इति तदनुग्रहार्थितया "किं नु मलं किमजिनं किमु श्म-श्रूणि किं तपः पुत्रं ब्रह्माण इच्छध्वं स वै लोकोवदावद" इत्यादिश्रुतिशैलीं दृष्ट्वा तत्प्रपञ्चनं कृतम् । तथा महाभारतेपि "शान्तिपर्वणि संन्यासोह्युक्तं"अथैककालिकोवाहमेकैकस्मि-न्दिनक्षये।चरन्भैक्षं मुनिर्मुण्डःक्षपयिष्ये कलेवरमिति" संन्यासा-नुज्ञां प्रार्थयमानं युधिष्ठिरं प्रति कृष्णेन संन्यासार्थं भ्रात्रा-द्यनुज्ञाप्रार्थनया वैराग्यस्यादार्ढ्यमवबुद्ध्य तद्दार्ढ्यार्थं अन्तः करणशुद्धये तं यज्ञादिषु प्रवर्त्तयितुकामेन स्वयमृष्यादि-द्वारा च संन्यासस्य बहुधा दूषणं कृतं, तत्र जनकोपा-ख्यानगते"पन्थानं पावनं हित्वा जनकं मौढ्यमास्थितम्।तं द दर्श प्रिया भार्या भैक्षवृत्तिमकिंचनमिति" श्लोके पावनमिति विशेषणेन दृढान्तःकरणशुद्ध्युपयोगिनं कर्ममार्गं विसृज्य हठान्मोक्षाश्रमग्रहणमयुक्तमिति विभावितम् । तथा मनुस्मृतौ च"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यध" इति अदृढवैराग्यपुरुषापेक्ष-यैव । 'यदहरेव विरजेत् तदहरेव प्रव्रजेत्, गृहाद्वा वनाद्वेति'

'ब्रह्मचर्य्यादेव प्रव्रजेदिति च' प्रत्यक्षश्रुतिमनादृत्य तदर्थोल्लङ्घनमिव कृतम्। इत्थमेवाचार्यैरपि शुद्धब्रह्मावाप्तिरूपमहाफलश्रवणमात्रसन्तुष्टः तत्प्राप्त्यर्थं तन्निदिध्यासनसाक्षात्कारजननसमर्थचित्तैकाग्र्यरहितो मन्दस्तदुपयोगिनं सगुणोपासनामार्गमपहाय विशुद्धब्रह्मविषयेषु श्रवणमनननिदिध्यासनेषु हठात्प्रवृत्तस्तदुचितं चित्तैकाग्र्यमनधिगच्छन् उभयभ्रष्टो माभूदिति तदनुजिघृक्षया तन्निर्गुणविषयप्रवृत्तेः प्रच्याव्य सगुणोपासनास्वेव स्थिरया भक्त्या प्रवर्त्तितुं वेदानां सगुणे समन्वयः प्रदर्शितः।

नचेदं तत्र समन्वयप्रदर्शनं कल्पसूत्रे प्रजामनुप्रजायस इत्यादिवाक्यस्य पुत्रसन्तानोगृहस्थस्यामृतत्वमित्यर्थप्रदर्शनमिवात्यन्तमगम्य विषये तात्पर्य्यप्रदर्शनं निर्गुणप्रकरणगतानामप्येतस्यैवाक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिरित्यादिवाक्यानां निर्गुणप्रतिपत्त्युपायतया प्रतिपाद्यमाने सगुणेप्यवान्तरतात्पर्यसत्वात्। ततः परः विशुद्धं तत्त्वान्तरं नास्तीति तु तथाभूतमन्दाधिकारिणः श्रद्धार्थं तद्बुद्धिसम्वादकैन्र्यायैस्तथोपपाद्य कल्पसूत्रे संन्यसनमिव तन्निगूहितमिति सर्वमुपपद्यते। नन्वेवं मन्दाधिकारिणः प्रतिप्रस्थानान्तरं कर्त्तव्यं चेत् स्वतन्त्रमेव कर्त्तुमुचितं नतु ब्रह्मसूत्रारूढं,ब्रह्मसूत्राणां विशुद्धब्रह्मविचारार्थत्वात् विशुद्धं ब्रह्माचार्यैरभ्युपगतमित्यङ्गीकारे शङ्करभगवत्पाददर्शि-

तस्य तेषां तद्विचारार्थत्वस्याप्यङ्गीकर्त्तव्यत्वादिति चेत् सत्यम्। शङ्करभगवत्पादैरेव तेषां सूत्राणां विश्वतोमुखत्वं सूत्रलक्षणप्राप्तभूषणमिति सगुणब्रह्मविचारार्थत्वमप्याविष्कृतम् । तथाहि प्रथमसूत्रभाष्य एव तावदस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितं च ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्त इति शुद्धे सगुणे च ब्रह्मणि ब्रह्मशब्दस्य व्युत्पत्तिप्रदर्शनेन तत्र विचार्यपरस्य ब्रह्मशब्दस्य तदुभयपरत्वं सूचितं तेन विशुद्धब्रह्मवत्सगुणब्रह्मापि। अत्र स्वरूपप्रमाणसाधनफलैः सह विचार्यमित्याशय आविष्कृतः, तदनुकूलया जन्मादिसूत्रे जगदभिन्ननिमित्तोपादानत्वरूपं जगत्कारणत्वं विशेषणतया सगुणस्य उपलक्षणतया शुद्धस्य च लक्षणमित्यभिप्रेत्य द्वयोरपि लक्षणमुखेन स्वरूपनिर्णयः कृतः ।

शास्त्रयोनिसूत्रस्य सगुणस्य जगत्कारणत्वाक्षिप्तसर्वज्ञत्वदृढीकरणार्थतयैकां योजनां प्रदर्श्य सगुणनिर्गुणसाधारण्येन लक्षितस्य ब्रह्मणः शास्त्रप्रमाणकत्वसमर्थनार्थतया योजनान्तरं च दर्शितम् ।

समन्वयसूत्रे पूर्वसूत्रोक्तं ब्रह्मणि शास्त्रस्य प्रामाण्यमुपपादयितुं वेदान्तरूपस्य तस्य सगुणनिर्गुणसाधारण्येनैव तस्मिंस्तात्पर्य्येणान्वयो वर्णितः,सच "सगुणवाक्यमपीह समर्थितं भवति निर्गुणवस्तुनि सर्वशः। न खलु निर्गुणवस्तुसमन्वयं न सहते सगुणेऽस्य समन्वयः॥सत्यासत्यवपुस्तथाहि सगुणं

ब्रह्मास्य विद्या तथा, तद्वत्तद्विषयस्य वेदवचसस्तात्पर्यमेवं विधम् ॥ तेनावान्तरमस्य वेदवचसस्तात्पर्य्यमन्यादृशं, अन्यन्निर्गुणरूपवस्तुविषयं सङ्कीर्त्यते भागश इति" संक्षेपशारीरकोक्तरीत्या निर्गुणे सर्वेषां वेदान्तवाक्यानां महातात्पर्य्येणान्वयः, सगुणेत्ववान्तरतात्पर्येणेति व्यवस्थया पर्यवस्यति । निर्गुणप्रकरणाम्नातानामपि वाक्यानां तत्तदन्तर्गतपदप्रवृत्तिनिमित्तगुणविशिष्टे सगुणे अवान्तरतात्पर्य्यं युज्यत एव !

ईक्षत्यधिकरणे वेदानां साङ्ख्याभिमतप्रधानकारणत्वपरतां निरस्य सगुणनिर्गुणसाधारण्येनैव ब्रह्मकारणत्वपरता प्रसाधिता ।

अतएव तत्स्वाप्यसूत्रपर्य्यन्तसद्विद्यादीनि निर्गुणप्रकरणगतानि वाक्यान्युदाहृत्य गतिसामान्यसूत्रभाष्ये सगुणनिर्गुण धारण्येन चेतनकारणत्वे सर्ववेदान्तानामैककण्ठ्यं प्रदर्श्य श्रुतत्वाच्चेति सूत्रभाष्ये सगुणस्य परमेश्वरस्य महिमनिरूपणार्थं प्रवृत्तायांश्वेताश्वतरोपनिषदि समाम्नातो "न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्। सकारणं करणाधिपाधिपो नचास्य कश्चिज्जनितानचाधिप" इति मन्त्र उदाहृतस्तदनन्तरमानन्दमयाधिकरणावतरणे कृत्स्नस्याध्यायशेषस्य सगुणनिर्गुणपरतयैव समुत्थानं वर्णितम्। "द्विरूपं हि ब्रह्मावगम्यते नामरूपविकारोपाधिकं तद्विपरीतं च सर्वोपाधिविवर्जितमित्यादिना"। एवमेकमपि ब्रह्मापेक्षितोपाधिसम्बन्धं निरस्तोपाधिसम्बन्धं चो-

पास्यत्वेन ज्ञेयत्वेन वेदान्तेषूपादिश्यत इति परोयं ग्रन्थ आरभ्यत इत्यन्तेन 'तदनन्तरं यथानन्दमयोभ्यासात् भूमासं प्रसादादध्युपदेशात् अक्षरमम्बरान्तधृतेः अदृश्यत्वादिगुणकोधर्मोक्तेः शब्दादेव प्रमितं सुषुप्त्युत्क्रान्त्योर्भेदेनेत्यादिसूत्रैस्सत्यज्ञानानन्ताखण्डानन्दरूपे प्रतिषिद्धस्थलत्वादिसर्वधर्मे प्रत्यगभिन्ने ब्रह्मणि वेदान्तानां समन्वयः प्रदर्शितः ।

एवमन्तस्तद्धर्मोपदेशात् सर्वत्र प्रसिद्धोपदेशात् दहर उत्तरेभ्य इत्यादिसूत्रैरुपासकानुग्रहार्थं दिव्यमङ्गलविग्रहयुक्ते सत्यकामत्वसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणशालिनि सविशेषेपि ब्रह्मणि तेषां यथार्हं समन्वयः प्रदर्शितः ॥ अविरोधाध्यायेपि तदनन्यत्वमारम्भणशब्दादिभ्य इत्यादिसूत्रैर्निर्विशेषवचनविलक्षणत्वादस्य तथात्वं च शब्दान्न प्रयोजनत्वात् वैषम्यनैर्घृण्येन सापेक्षत्वात्तथाहि दर्शयतीत्यादिसूत्रैर्जगदुपादानत्वजगत्स्रष्टृत्वसर्वभूतानुग्राहकत्वसर्वभूतदयालुत्वादिगुणशालिनि सविशेषेपि ब्रह्मणि समन्वयस्य विरोधपरिहारो दर्शितः । साधनाध्यायेप्यानन्दादयः प्रधानस्याक्षरधियां त्ववरोधः समानः तद्भावाभ्यामौपसदवत्तदुक्तमिति निर्विशेषब्रह्मणि ज्ञानार्थमानन्दादीनामस्थूलत्वादीनामिव कामादितरत्र तत्र चायतनादिभ्य इत्यादिभिर्बहुभिरुपासनार्थं सविशेषेपि ब्रह्मणि सत्यकामत्वादिगुणानामुपसंहारो वर्णितः । फलाध्याये आवृत्तिरसकृदुपदेशात् आत्मेति तूपगच्छन्ति ग्राहयन्ति चासीनः सम्भवात्

यत्रैकाग्रयता तत्राविशेषात्तदधिगम उत्तरपूर्वयोराश्लेषविनाशौ तद्व्यपदेशादित्यादिसूत्रैर्निर्गुणे श्रवणादीनां सगुणे उपासनानां च आवृत्तिः कार्या इत्येवमादयः केचिदर्थाः सगुणनिर्गुणयोस्तन्त्रेण प्रथमे पादे निरूपिताः।

द्वितीये पादे सगुणोपासनाफलप्राप्त्यर्थं विदुष उत्क्रान्तिप्रकारो निर्गुणज्ञानफलप्राप्त्यर्थं उत्क्रान्त्यपेक्षाभावश्च वर्णितः

तृतीये पादे सगुणब्रह्मविदामर्चिरादिमार्गस्तेन मार्गेण प्राप्यं च सगुणं ब्रह्मेत्ययमर्थो निरूपितः।

चतुर्थे पादे सम्पाद्याविर्भावस्य न शब्दादित्यादिभिस्त्रिभिरधिकरणैर्निर्गुणब्रह्मवित्प्राप्यफलस्वरूपं सङ्कल्पादेवतु तच्छ्रुतेरित्यादिभिरधिकरणैः सगुणोपासनास्वरूपं च विवेचितम्।

नन्वेवमुक्तरीत्या सूत्राणां सगुणब्रह्मविचारार्थत्वमप्यस्तीत्याविष्कृतवद्भिः शङ्कराचार्य्यैरेव सगुणमपि ब्रह्म स्वरूपप्रमाणसाधनफलैर्विचारितं चेत् किमर्थं सगुणविषये श्रीकण्ठाचार्य्यैर्भाष्यान्तरं कृतम्।सूत्राणां कात्स्न्येॅन सगुणपरत्वयोजनया सगुणे भक्त्यतिशयसिद्ध्यर्थं चेत् निर्गुणे विश्वासातिशयसिद्ध्यर्थं शङ्कराचार्य्यैस्तेषां कात्स्न्येॅन निर्गुणपरत्वयोजना किमिति न कृतेति। अत्र ब्रूमः। शङ्कराचार्यैः सगुणब्रह्मसद्भावमात्रं निरूपितं, नतु तत्परमं शिव इति विष्णवादिदेवतान्तरत्वशङ्कानिरासेन नि(र्गुण) मपि दहराधिकरणे परमेश्वर एवात्र दहराकाशो भवितुमर्हति न भूताकाशो जीवो वेति सिद्धान्तमुपक्रम्य यदिदमास्मिन्ब्रह्म(ण) इति पूर्ववाक्ये

ब्रह्मशब्देन जीव उच्यते तस्य देहरूपपुरःस्वामित्वादन्ततः प्राक् प्रकृतः स एव दहराकाशो भवितुमर्हतीति शङ्कापरिहारप्रस्तावे ऽथवा जीवपुर एवास्मिन् ब्रह्म संनिहितमुपदेक्ष्यते यथा शालग्रामे विष्णुः सन्निहित इति विष्णोर्दहराकाशतया निर्णिनीषितस्य सगुणब्रह्मणश्चोपमानोपमेयभावनिर्देशादिह निरूप्यमाणं सगुणं ब्रह्म न विष्णुरूपमिति सूचितम् । दहराधिकरण एव यद्यप्याकाशशब्दो भूताकाशे रूढस्तथापि तेनैव तस्योपमा नोपपद्यत इति भूताकाशस्तु सत्यामप्याकाशशब्दप्रसिद्धावप्युपमानोपमेयभावाद्यसम्भवात न ग्रहीतव्य इति च तत्पूर्वापरग्रन्थयोः यावान् वा अयमाकाशस्तावानेषोन्तर्हृदय आकाश इत्युपमानोपमेयभावनिर्देशेन दहराकाशस्य भूताकाशभिन्नत्वव्यवस्थापनात् तस्य न्यायस्य मध्यवर्त्तिग्रन्थेप्यव्याहतं प्रवृत्तेः । तथा यावदधिकाराधिकरणभाष्ये अवान्तरतमा नाम वेदाचार्य्यः पुराणऋषिर्विष्णुनियोगात् कलिद्वापरयोः सन्धौ कृष्णद्वैपायनः सम्बभूव सनत्कुमारोपि ब्रह्मणो मानसः पुत्रः स्वयं रुद्राय वरप्रदानात्स्कन्दत्वेन प्रादुर्बभूवेत्युक्तिभङ्ग्या विष्णोरप्यपकृष्टत्वेन विभावितः । संहाररुद्रोऽत्र निर्णिनीषितं सगुणं ब्रह्म न सम्भवतीति तु कैमुतिकन्यायेन सूचितं संहाररुद्र एव हि "त्वामेव पुत्रमिच्छामि त्वया वा सदृशं विभो" इति प्रार्थयमानं ब्रह्माणं प्रति वरप्रदानात्पुत्रत्वेन प्रादुर्भूतः । कुमारसंभवोपाख्यानविषय इति पुराणेषु प्रसिद्धम् । एवं विष्णुरु-

द्रभिन्नत्वेन सूचितः सगुणं ब्रह्म त्रिमूर्त्युत्तीर्णं परमशिव इत्यं-प्यन्तरादित्यविद्याधिकरणेषु निर्णिनीषिते सगुणे ब्रह्मणि प्रायः परमशिववाचकपरमेश्वरशब्दप्रयोगेन सूचितं भगवत्पादहृदयाभिज्ञैराचार्य्यैर्वाचस्पतिमिश्रैरपि शास्त्रोपक्रमे-"षड्भिरङ्गैरुपेताय विविधैरव्ययैरपि॥ शाश्वताय नमस्कुर्मो वेदाय च भवायचेति" वेदभवशब्दाभ्यामौचित्यादप्रमाणप्रमेयभावेनान्वितयोर्नमस्कार्य्यत्वेन निर्देशात्षडङ्गदशाव्ययरूपकल्याणगुणविशिष्टत्वेन भवशब्दवाच्यत्वेन च प्रसिद्धः परमशिव एवात्र शास्त्रे निरूपणीयं सगुणं ब्रह्मेति सूचितम् । तथापि तत्तदधिकरणविषयवाक्यानां देवतान्तरपरत्वनिरासेन तन्न व्यवस्थापितम्, अतिगूढसूचनामात्रेण श्रोतॄणां हृदयसाक्षिकः प्रत्ययो न भवतीति तदर्थमत्र त्रिमूर्त्युत्तीर्णः परमशिवएवात्र शास्त्रे प्रतिपाद्यं सगुणं ब्रह्म दहरशाण्डिल्योपकोशलवैश्वानरादिविद्याविध्युक्तप्रकारेण तस्यैवोमासहितस्योपासना कार्या। सगुणोपासनाभिरर्चिरादिमार्गेण प्राप्यं च स्थानं तदीयदिव्यलोकरूपमेवेत्यस्मिन्नर्थे वेदान्तानां न्यायतः सामरस्यमुपपादयितुं आचार्य्यैः पृथग्भाष्यमारब्धम् ।

नन्वेवं सति शाङ्करभाष्ये सगुणब्रह्मनिरूपणं व्यर्थम्। अवश्यारब्धव्येनानेनैव भाष्येण "निर्विशेषं परं ब्रह्म साक्षात्कर्त्तुमनीश्वराः। ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः।१।वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ॥ तदेवाधिर्भवेत्साक्षादपेतद्वैतकल्पनमिति" कल्पतरूक्तस्य तन्निरूपणप्रयोजनस्या-

वश्यकात्ततएव सिद्धेरिति चेत् । शृणु । तस्यापि साफल्यं निर्गुणब्रह्मनिरूपणार्थमेव शङ्करभगवत्पादै र्भाष्यं प्रवर्त्तितं तन्निरूपणं तत्ताधिकरणविषयवाक्यानां जीवाद्यन्यपरत्वशङ्कारूपपूर्वपक्ष(निरूपण)पूर्वकं कार्य्यं तन्निरासश्च सर्वकर्तृत्वसर्वपालयितृत्वसर्वप्रशासितृत्त्वसर्वसंहर्तृत्त्वादिलिङ्गैः कार्य्यः । तत्रेयं शङ्का । भवेत (शुद्ध)सर्वधर्मस्य शुद्धचिन्मात्ररूपस्येह निरूपणीयस्य ब्रह्मणः के धर्माः, यैर्ब्रह्मलिङ्गत्त्वाभिमतैः जीवादिपूर्वपक्षनिरासः क्रियेत इति तत्रायं परीहारोवाच्यः । वस्तुतो निर्धर्मकस्यापि ब्रह्मणः सन्ति व्यवहारदशायां कल्याणगुणरूपा वहवो धर्माः तदुपहितं तदेव निर्विशेषब्रह्मसविशेषमित्यप्युच्यते, तस्य सविशेषस्य दहरशाण्डिल्यवैश्वानरविद्याद्युपास्यस्य धर्मा निर्विशेषप्रकरणेपि तत्प्रतिपत्त्युपायत्वेन तत्स्तुत्यर्थत्वेन वोपादीयन्ते तैर्ज्जीवादिपूर्वपक्षनिरासः क्रियत इति तदुपयोगितया इदमपि शास्त्रे सविशेषब्रह्मप्रतिपत्त्यर्थं तद्विषयाणि वाक्यान्युदाहृत्य तन्निरूपणं कार्यम् । फलप्रतिपत्त्यर्थमपि तन्निरूपणं कार्यं तथाहि यद्यपि तत्त्वदृष्ट्या तत्त्वज्ञानफलं निर्विशेषं ब्रह्मावाप्तिः तथापि तदेव निर्विशेषं ब्रह्म यावत्सर्वमुक्तिसगुणेश्वरभावमापाद्यावतिष्ठत इति व्यवहारदृष्ट्या सत्यकामत्वादिगुणकपरमेश्वरभावापत्तिरूपमपि भवति तत्फलम् ।

अतएव प्रथमाध्याये दहराधिकरणे दहराकाशो वाक्यशेषश्रुतैः सत्यकामत्वादिगुणैः परमेश्वर इति प्रसाध्य

प्रजापतिविद्यायां य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽविपिपासः सत्यकामः सत्यसङ्कल्प इति, जीवेऽपि तेषां गुणानां श्रवणान्न तेषां परमेश्वरलिङ्गत्वमित्याशङ्कामुद्भाव्य तन्निरासार्थं प्रवृत्तस्योत्तराच्चेदाविर्भूतस्वरूपस्थितिसूत्रस्य मुक्तौ जीवस्य परमेश्वरभावापत्त्यैव सत्यकामत्वादिगुणाविर्भावो न तु तद्भिन्नावस्थतयेति तेषां न ब्रह्मलिङ्गत्वे काचिदनुपपत्तिरिति तात्पर्यमुक्तम् ।

तस्मादविद्याप्रत्युपस्थापितं अपारमार्थिकं जैवं रूपं कर्तृत्वभोक्तृत्वरागद्वेषादिदोषकलुषितं अनेकार्थयोगितद्विलयनेन तद्विपरीतं अपहतपाप्मत्वादिगुणकं पारमेश्वरं रूपं विद्यया प्रतिपद्यत इति प्रथमाध्याय एव जगद्वाचित्वाधिकरणेऽपि बालाकाजातशत्रुसम्वादस्योपक्रमोपसंहाराभ्यां परब्रह्मपरत्वव्यवस्थापनप्रस्तावे तथोपसंहारस्यापि निरतिशयफलश्रवणात् ब्रह्मविषयत्वं दृश्यते, सर्वान् पाप्मनोपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेदेत्युक्त्या मुक्तिफलस्य सगुणेश्वरभावापत्तिरूपत्वं दर्शितम् परमेश्वरादन्यत्र सर्वभूताधिपत्यासम्भवात् ।

तथा द्वितीयाध्यायेऽप्यंशाधिकरणे जीवस्येश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखभोगेनेश्वरस्यापि दुःखित्वं स्यात् यथा लोके हस्तपादाद्यन्यतमांशगतेन दुःखेनांशिनो देवदत्तस्यापि दुःखित्वं तद्वत् । अतश्च तत्प्राप्तानां महत्तरं दुःखं प्राप्नुयादतो वरं पूर्वावस्थः संसार एवास्त्विति सम्यग्ज्ञानानर्थक्यप्रसङ्ग

इति शङ्काग्रन्थेन बिम्बप्रतिबिम्बभावकृता सङ्करमवलम्ब्य समाहितेन मुक्तस्येश्वरभावापत्तिराविष्कृता। नच तत्रेश्वरशब्दः कथंचिच्छुद्धचैतन्यपरो योजनीयः,यतः परात्तुतच्छ्रुते रिति तत्पूर्वाधिकरणे जीवस्याविद्यावस्थायां कर्तृत्वमीश्वरापेक्षमिति प्रसाध्य नत्वेवमीश्वरस्य कारयितृत्वे सति वैषम्यनैर्घृण्ये स्यातामिति शङ्कोत्तरत्वेन कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य इति तदीयगुणसूत्रस्यावतारितत्वात्तदधिकरणं सगुणेश्वरविषयमिति तदनन्तरप्रवृत्तमंशाधिकरणमपि तद्विषयमेव ।तदुपक्रमे जीवेश्वरयोरुपकार्योपकारकभाव उक्तः। सच सम्बद्धयोरेव दृष्टो लोके यथास्वामिभृत्ययोर्यथावाग्निविस्फुलिङ्गयोः । ततश्च जीवेश्वरयोरपि उपकार्योपकारकभावाभ्युपगमात्किं स्वामिभृत्यवत्संवन्धः, आहोस्विदग्निविस्फुलिङ्गवदित्यस्यां विचिकित्सायामनियमो वा प्राप्नोति । अथवा स्वामिभृत्यप्रकारे ईशित्रीशितव्यभावस्य प्रसिद्धत्वात् तद्विध एव सम्बन्धः प्राप्नोतीति पूर्वपक्षप्रवर्त्तनेन तस्याधिकरणस्य पूर्वाधिकरणसमानविषयत्वस्फुटीकरणात् ।

तृतीयाध्यायेऽपि सन्ध्याधिकरणे परमेश्वराभिन्नस्य जीवस्यैश्वर्यवशात्स्वप्ने साङ्कल्पिकी रथादिसृष्टि र्भविष्यतीति शङ्कोत्तरत्वेनावतारितस्य पराभिध्यानात्तु तिरोहितं ततोह्यस्य सम्वन्धविपर्ययाविति सूत्रस्य तात्पर्यकथनावसरे जीवेश्वरयोः सत्यप्यंशांशित्वे प्रत्यक्षमेव जीवस्येश्वरसमानधर्मत्वं नास्त्येव न नास्ति विद्यमानमपि तत्तिरोहितं तत्पुनस्ति-

रोहितं सत्परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूत-ध्वान्तस्य तिमिरतिरस्कृतैव दृक्शक्तिरौषधवीर्यादीश्वरप्र-सादात्संसिद्धस्य कस्यचिदेवाविर्भवतीति ग्रन्थसन्दर्भेण मु-क्तस्य सगुणेश्वरभावापत्तिराविष्कृता। केवलचिन्मात्ररूपता-पत्तौ सत्यसङ्कल्पत्वादिधर्माविर्भावासम्भवात् ।

चतुर्थाध्याये तु स्वेन रूपेणाभिनिष्पद्यत इति मुच्यमान विषयायां श्रुतौ केन रूपेणाभिनिष्पत्तिर्विवक्षितेति बुभुत्सा-यां ब्राह्मणे जैमिनिरुपन्यासादिभ्य इतिसूत्रेण यद्ब्राह्मं रूपमप-हतपाप्मत्वादिसत्यसङ्कल्पत्वावसानं सर्वज्ञत्वसर्वेश्वरत्वादि च तेनाभिनिष्पत्तिः। य आत्मापहतपाप्मेत्याद्युपन्यासेन स तत्र पर्येति ईक्षन् क्रीडन् रममाणस्त्रीभिर्वा यानैर्वेत्यादि ऐश्व-र्याऽऽवेदनेन चेति जैमिनिमतं चितिमात्रेण तदात्मकत्वादि-त्यौडुलोमिरित्यनन्तरसूत्रेण, एवं वा अरे अयमात्मा अन-न्तरोऽवाह्यः कृत्स्नः प्रज्ञानघनएवेत्यादिश्रुत्या चैतन्यमा-त्रमात्मनः स्वरूपमित्यवगते स्तन्मात्रेणाभिनिष्पत्तिरिति मतान्तरं चोपन्यस्य तदनन्तरपठितस्य, एवमप्युपन्यासात् पूर्वभावादविरोधं वादरायण इतिसिद्धान्तसूत्रस्य ।

एवमपि पारमार्थिकचैतन्यस्वरूपत्वाभ्युपगमेऽपि व्यव-हारापेक्षया पूर्वस्याप्युपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्य-रूपस्याप्रत्याख्यानादविरोधं वादरायण आचार्यो मन्यते इति तात्पर्यकथनेन मुक्तस्य निरतिशयैश्वर्य्यशालिसगु-णेश्वरभावापत्तिरतितरां स्पष्टीकृता । निर्गुणब्रह्मवादे तद्वा-

वापत्तिरेव मुक्तिरिति वक्तव्ये कथं सगुणेश्वरभावापत्तिरेव मुक्तिरुच्यत इति शङ्का च समाहिता ।

वस्तुदृष्ट्या मुक्तस्य चैतन्यमात्रत्वेऽपि बिम्बभूतपरमेश्वरभावं प्राप्तस्य तस्य परमेश्वरवदेव वद्धपुरुषव्यवहारदृष्ट्या यावत्सर्वमुक्तिनिरतिशयैश्वर्य्यं पारमेश्वरत्वेन प्रसिद्धम् । अन्यच्च सकलं धर्मजातं सम्भवतीति तदेवं निर्विशेषनिरूपणार्थमेव ब्रह्मलिङ्गप्रदर्शनोपयोगितया तत्त्वज्ञानप्राप्यफलरूपसगुणेश्वरमहिमप्रपञ्चनोपयोगितया प्रायः सकलसगुणविद्याप्रकरणाम्नाताः सर्वेऽपि परमेश्वरस्य कल्याणगुणाः प्रदर्शनीया जाता इति निरूपणीयबाहुल्यान्निर्गुणनिरूपणप्राधान्येन प्रवृत्तेऽपि भगवत्पादीये भाष्ये सगुणप्रसङ्ग एव भूयान् निर्गुणविचारो निरूपणीयबाहुल्याभावात्स्वल्पश्च दृश्यते । यथा चतुर्ष्वपि वेदेषु सर्वप्राण्यनुग्रहार्थं ब्रह्मभावावाप्तिरूपमहापुरुषार्थप्रतिपादनैदंपर्य्येणैव प्रवृत्तेषु तदुपयोग्यन्तःकरणशुद्धिजनककर्मनिरूपणार्थमेव भूयान्प्रपञ्चः । ब्रह्मनिरूपणार्थो वेदान्तभागस्तु निरूपणीयबाहुल्याभावात्स्वल्पः ।

नन्वेवं सगुणविचारस्य निर्गुणविचारार्थत्वे निर्गुणविचारप्रतिज्ञयैव सगुणविचारः साधनफलविचारवदर्थात्कर्त्तव्यत्वेन सिद्ध्यति किमर्थं सगुणविचारस्यापि प्रतिज्ञातत्वसिद्ध्यर्थं प्रथमसूत्रगतस्य विचार्यपरब्रह्मशब्दस्य सगुणसाधारण्यमस्ति तावदित्यादिभाष्येणोक्तमिति चेत्,

ब्रह्मसूत्राणां साकल्येन सगुणपरतया योजनान्तरमप्यस्तीति सूचनार्थं तदर्थप्रतिज्ञोपयोगितया तदुक्तमित्यवेहि। तद्योजनान्तरं कथमित्याकाङ्क्षायां समासभेदाश्रयणादिनेति स्थालीपुलाकन्यायेन क्वचिद्दर्शयितुमेव शास्त्रयोनिसूत्रे वर्णकद्वयं कृतम्।

कल्पतरुकारैरपि भाष्यकारीयं शास्त्रयोनिसूत्रस्य सगुणनिर्गुणोभयपरतया योजनाद्वयं स्थालीपुलाकन्यायावलम्बनेन प्रवृत्तं नतु तन्मात्रनिष्ठमिति प्रदर्शयितुमेव स्वयमप्यग्निहोत्रादितु तत्कार्यायैव तद्दर्शनादितिसूत्रस्य सगुणनिर्गुणोभयपरयोजनाद्वयं भाष्यसूचितं स्फुटीकृतं तैः खल्वग्निहोत्रादिकं तस्मै तदधिगम उत्तरपूर्वाघयोरिति सूत्रे तदधिगमशब्देन प्रस्तुताय निर्विशेषब्रह्मापरोक्षज्ञानरूपाय कार्यायैव विविदिषन्ति यज्ञेनेत्यादिश्रुतिदर्शनात् समस्तकर्मवृन्ददाहकत्वेन कर्मजातिविरोधिनोपि तस्य ज्ञानस्य नित्ययज्ञादिकर्मविशेषकार्यत्वं नायुक्तं समस्तवनदाहकस्यापि दावदहनस्य वनान्तर्गतवेण्वादिकार्य्यत्वदर्शनादिति निर्गुणविषयमेकं योजनं प्रदर्शितम्। अग्निहोत्रादिकं तस्य सगुणब्रह्माधिगमस्य कार्यायैव सगुणविदां केकयादीनां यज्ञाद्यनुष्ठानदर्शनान्निर्गुणविद्याफलस्येव सगुणविद्याफलस्य कर्मकार्य्यत्वं नायुक्तं ब्राह्मलौकिकभोगरूपस्य तस्य सातिशयत्वदर्शनादिति सगुणविषयं योजनान्तरं प्रदर्शितम्। एवं जिज्ञासासूत्रे विचार्य्यपरस्य ब्रह्मशब्दस्य सगुणसाधारण्यप्रदर्शनेन

क्वचित्सगुणनिर्गुणोभयविषययोजनान्तरप्रदर्शनेन च शङ्कराचार्य्यैः सूचितमेव सर्वेषां ब्रह्मसूत्राणां सगुणपरं योजनान्तरं उपासकानुग्रहार्थमेव आविष्कर्त्तुं श्रीकण्ठशिवाचार्य्यैर्भाष्यं प्रवर्त्तितम् ।

नन्वेवं निर्गुणब्रह्माभ्युपगमाविरोधेन शङ्कराचार्याभिमत एव सगुणब्रह्मनिरूपणप्रकारः श्रीकण्ठाचार्य्यैराविष्कृतश्चेत्तन्मते यानि सगुणब्रह्मविषयत्वेन सम्प्रतिपन्नानि वेदान्तवाक्यानि तान्येवाधिकरणेषूदाहृत्य एतैर्देवतान्तरपरत्वादिनिरासपूर्वकं स्वाभिमतसगुणेश्वरपरतया निर्णेयानि स्युः । तैर्येष्वधिकरणेषु यानि वेदान्तवाक्यानि सद्विद्यानन्दवल्लीप्रतर्दनाख्यायिकाकठवल्लीअन्तर्यामिब्राह्मणमुण्डकभूमिविद्यादीनि निर्गुणविषयत्वेन निर्णीतानि तान्येव तेष्वधिकरणेष्वेतैः सगुणविषयतया निर्णीतानीति सर्वत्रापि दृश्येते तान्यपि सगुणविषयाणि चेदेषां किं प्रमाणमूलो निर्गुणाभ्युपगम इति शङ्केयं तस्मान्निर्गुणप्रस्थानाविरोध्येवेदं भाष्यं प्रवर्त्तितमिति प्रतिभातीति चेत् । उच्यते । चेतनाचेतनात्मकं सर्वं जगद्ब्रह्म चिच्छक्तिरूपम् । साच ब्रह्मणः स्वरूपभूता तदभिन्ना तदीयसकलमङ्गलगुणरूपा च, ब्रह्म च वस्तुतो निर्विकारमिति सन् घट इत्यादिप्रत्यक्षं ब्रह्म सत्ताविषयं स्फुरति घट इत्यादिप्रत्यक्षं ब्रह्म स्फुरणविषयं अहंसुखीत्यादिप्रत्यक्षं ब्रह्मानन्दलेशविषयमिति च शुद्धाद्वैतसिध्युपयोगिनीं अद्वैतमर्यादामेव स्वसिद्धान्ततया अङ्गीकृतवतां निरन्वयोपासका-

नामिहैव मुक्तिरिति मतम् । तद्विरोध्यर्थप्रसङ्गे सर्वत्राप्युपदिष्टवतां तच्च स्वयमेवोपपादितवतां श्रीकण्ठाचार्य्याणां निर्गुणं निष्प्रपञ्चं सकलजीवाभिन्नं शुद्धाद्वैतरूपं ब्रह्मेति परमसिद्धान्त इत्ययमर्थः कथमपि प्रत्याख्यातुं न शक्यते । तत्प्रत्याख्याने तदीयबहुसिद्धान्तव्याकोपप्रसङ्गात् ॥

तथा शुद्धब्रह्माभ्युपगमे च शङ्कराचार्यैस्तद्विषयत्वेन निर्णीतानि सद्विद्यादीनि वेदान्तवाक्यान्येव मूलप्रमाणानि, तेषां यत्सगुणे समन्वयनिरूपणं तन्निर्गुणे तात्पर्यं नास्तीत्यभिप्रायेण न भवति किन्तु सगुणेऽपि तात्पर्यमस्तीत्यभिप्रायेण । अस्ति हि सद्विद्यादिनिर्गुणप्रकरणगतानामपि गुणपुरस्कारेण प्रवृत्तानां सन्दर्भाणां तत्तद्गुणविशिष्टेप्यवान्तरतात्पर्य्यम्, यदवलम्बनेन शाङ्करभाष्येऽपि ब्रह्मलिङ्गोपन्यासः । तथाहि ईक्षत्यधिकरणे प्राथमिकमीक्षणलिङ्गं आनन्दमयाधिकरणे तद्धेतुव्यपदेशाच्चेति सूत्रोपात्तं इदं सर्वमसृजत सदिदं किंचेति वाक्योक्तं सर्वस्रष्टृत्वलिङ्गं प्राणस्तथानुगमादित्यधिकरणे अनुगमहेतुक्रोडीकृतम् । एष लोकाधिपतिरेष लोकपाल इत्यादिवाक्योक्तं रक्षितृत्वादिलिङ्गमत्ता चराचरग्रहणादित्यधिकरणे सौत्रहेतूपात्तं यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन इति विषयवाक्योक्तं ब्रह्मक्षत्रोपलक्षितसर्वप्रपञ्चसंहर्तृत्वलिङ्गं अन्तर्य्याम्यधिदैवादिषु तद्धर्मव्यपदेशादित्यधिकरणे सौत्रहेतूपात्तं यः पृथवीमन्तरोयमयतीत्यादिवाक्योक्तं सर्वान्तर्य्यामित्वादिलिङ्ग अ-

दृश्यत्वादिगुणको धर्म्मोक्तेरित्यधिकरणे सौत्रहेतूपात्तं यः सर्वज्ञः सर्वविदित्यादि वाक्योक्तं सर्वज्ञत्वादिलिङ्गं भूमाधिकरणे धर्मोपपत्तेश्चेति गुणसूत्रोक्तं आत्मनः प्राण इत्यादिवाक्योक्तं सर्वकारणत्वादिलिङ्गं अक्षराद्यधिकरणे सा च प्रशासनादिति गुणसूत्रोक्तं एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादिवाक्योक्तं प्रशासितृत्वलिङ्गं सुषुप्त्युत्क्रान्त्यधिकरणे पत्यादिशब्देभ्य इति गुणसूत्रोपात्तं सर्वस्य वशी सर्व्वस्येशानः सर्वस्याधिपतिः इत्यादिवाक्योक्तं सर्वाधिपतित्वादिलिङ्गं जगद्वाचित्वादित्यधिकरणे सौत्रहेत्वाक्षिप्तं यो वै बालाक एतेषां पुरुषाणां कर्त्ता यस्य वै तत्कर्म स वै वेदितव्य इत्यादिवाक्योक्तं सकलजगत्कर्तृत्वं लिङ्गं वाक्यान्वयात् इत्यधिकरणे अन्वयशब्देन क्रोडीकृतम् । अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेद इत्यादिवाक्योक्तं सकलनामरूपप्रपञ्चस्रष्टृत्वं चेत्येवं निर्गुणविषयेष्वधिकरणेषु सगुणब्रह्मधर्मरूपाणां लिङ्गानां उपन्यासो दृश्यते तेन निर्गुणप्रकरणगतानामपि तत्तल्लिङ्गप्रतिपादकवाक्यानां तत्तद्विशिष्टे सगुणस्वरूपे अवान्तरतात्पर्य्यमित्यवसीयते तदवलम्बतं श्रीकण्ठाचार्य्याणां तत्र तत्राधिकरणे तस्य तस्य विषयवाक्यस्य सगुणे परमेश्वरे समन्वयकथनं महातात्पर्यविषये निर्गुणे समन्वयाकथनं तु तत्प्रच्छादनेन सगुणे भक्त्यतिशयसिद्ध्यर्थमित्युक्तमेव ।

ननु समन्वयाकथनं उक्तरीत्या भवत्वविरुद्धं निर्गुण-

प्रकरणागतानां सगुणवाक्यानां यदेकवाक्यतया महातात्पर्य्येण निर्गुणपर्यवसायित्वं समर्थनीयम्। तेषां साक्षान्निर्गुणविषयाणामपि वाक्यानां प्रयत्नेन सगुणे योजनं कृतं दृश्यते यथा तावद्दीक्षत्यधिकरणे एकमेवाद्वितीयमिति वाक्यस्य यथा वा भूमाधिकरणे यत्र नान्यत्पश्यति इत्यादिवाक्यस्य यथा आरम्भणाधिकरणे यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् वाचारम्भणं विकारोनामधेयं मृत्तिकेत्येव-सत्यमिति वाक्यस्य तत्राद्ययोर्वाक्ययोर्यत्सगुणपरतया योजनं कृतं तत्पूर्वपक्ष एवोदाहृतम्। तृतीयस्य त्वित्थं योजनाद्वयं दर्शितं विकारोनामधेयं च वाचारम्भणं वाचा यया अभिलापार्थक्रियारूपव्यवहारस्य निष्पादकं भवति मृद्द्रव्यस्येव घटाद्यवस्था घटादिनामधेयं च अर्थक्रियाभिलापरूपव्यवहार्रनिष्पत्तये भवतीति यावत्॥

वस्तुतो घटादिकमपि मृत्तिकेत्येव सत्यं प्रामाणिकं मृद्व्यतिरेकेण घटभावादर्शनात्। अथ वा वाचारम्भणं विकारः घटोवाचारम्भणं घटोयमिति वाचारम्भणविषयमात्रं मृद्द्रव्य एव व्यवहारसिद्ध्यर्थं जायमानमवस्थान्तरं नतु मृदोद्रव्यान्तरं मृत्तिकेत्येव नामधेयं सत्यं घटादिकं मृत्तिकेति कृत्वैव तत्र सर्वं मृद्घटादिनामधेयमसत्यं सति प्रामाणिकेऽर्थे साधु नतु द्रव्यान्तरमिति कृत्वा यतोघटोमृदेवेति। इदं योजनाद्वयं कारणव्यतिरिक्तस्य कार्यस्य मिथ्यात्वप्रतिपादनपरा वाचारम्भणश्रुतिरिति पक्ष-

प्रतिक्षेपार्थं सा श्रुतिः कार्य्यकारणयोस्तात्त्विकाभेदप्रतिपादनपरेति दर्शयितुं क्तम्। तथाहि । प्रागेकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तदुपपादनार्थं यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादिति दृष्टान्त उपन्यस्तः । तत्र नायं दृष्टान्त उपपद्यते। मृत्पिण्डस्य तद्विकाराणां घटशरावादीनां वा अर्थक्रियाभिलापभेदेनात्यन्तभिन्नतया मृत्पिण्डज्ञानेन तद्विकाराणां ज्ञातत्वायोगात् इत्याशङ्कायां घटमृत्पिण्डादि कार्यकारणभेदव्यवस्थापनेन दृष्टान्तोपपादनार्थं वाचारम्भणश्रुतिः प्रववृत इत्याचार्याणामभिमतम्। तस्याः प्रथमयोजनायामयमर्थः-विकारो घटत्वपृथुबुध्नोदरत्वादिः, नामधेयं तत्प्रवृत्तिनिमित्तकं घटादिपदं तदुभयं वाचारम्भणं वाचा वाक् घटमानयेत्यभिलापः, तेन तज्जन्यार्थक्रियापि लक्ष्यते आरभ्यते निष्पाद्यते अनेनेत्यारम्भणं कारणं वाचारम्भणं विकारोनामधेयं च क्रमणार्थक्रियाभिलापयोः कारणमिति यावद्विकारनामधेयोभयवृत्तेरारम्भणशब्दस्य नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति नपुंसकशेष एकवद्भावश्च । अनेनैतदुक्तं मृत्पिण्डतद्विकाराणां द्रव्यैक्येऽपि पिण्डत्वपृथुबुध्नोदराद्याकारभेदेन तत्प्रवृत्तिनिमित्तकनामधेयभेदेन अर्थक्रियाभिलापभेद इति ।

ननु गोमहिषवत द्रव्यभेदेनैव तद्भेदः किमिति नेष्यतेत्याशङ्क्योक्तं मृत्तिकेत्येवसत्यं घटशरावादिकमपि मृत्तिकेत्येव प्रामाणिकं तदेव मृद्द्रव्यमिदानीं घटरूपेणासीदिति प्रत्यभि-

ज्ञाप्रत्यक्षरूपेण गुरुत्वद्वैगुण्याभावादियुक्तरूपेण च प्रमाणेन सिद्धम् ।

एवं प्रमाणसिद्धैक्यनिर्व्वाहायार्थक्रियाभिलापभेदस्य विकारनामधेयभेदौपाधिकत्वं कल्पयितुं युक्तमिति भावः ।

द्वितीययोजनायां त्वयमर्थः वाचारम्भणं विकारः घटशरावादिविकारोघटोयमिति व्यवहारविषयमात्रं नतु मृदो द्रव्योतर द्रव्यान्तराभावे मृदः पिण्डतादशायामप्रवृत्तं घटशरावादिनामधेयं कथं पश्चात्प्रवर्त्तत इत्याशङ्कायामुक्तं नामधेयं मृत्तिकेत्येव सत्यं मृन्नामधेयमिव घटशरावादिनामधेयमपि त द्रव्यं मृत्तिकेति कृत्वैव सति प्रामाणिकेऽर्थे साधु । नतु द्रव्यान्तरमिति कृत्वा प्रत्यभिज्ञाविरोधादिना द्रव्यान्तरस्याप्रामाणिकत्वादिति । अस्मिन्पक्षे सत्ये साधौ च सच्छब्द इति स्मृतेः प्रामाणिकार्थवाचिसत्यशब्दपर्यायात्सच्छब्दा त्तत्र साधुरित्यर्थे यत्प्रत्ययः । आरम्भणशब्दो विषयभावेन निष्पादकं वदन् विषयत्वपर्य्यवसायी तस्य पुल्लिङ्गविशेषणत्वेपि द्विगुरेकवचनमितिवत् लिङ्गसामान्यविवक्षया नपुंसकनिर्देश इति विशेषः । एवं ब्रह्मणे निर्गुणत्वनीरूपत्वपराणां निष्प्रपञ्चत्वपराणां च वाक्यानां हेयगुणरूपराहित्यविषयतया न स्थानत इत्याद्यधिकरणेषु योजनं कृतम् । किंच जीवस्य ब्रह्माभेदे प्रमाणमूर्द्धन्यानि महावाक्यानि तत्वमस्यादीनि इतरव्यपदेशाद्धिनाकरणादिदोषप्रसक्तिः । शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिरित्यारम्भणाधिकरणपुरुषाधिकरणगतपूर्व-

पक्षसूत्रभाष्ययोर्जीवब्रह्माभेदपूर्व्वपक्षावलम्बनत्वेन विलिख्यादिकं तु भेदनिर्द्देशात्, अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनादिति तत्सिद्धान्तसूत्रभाष्ययोस्तत्त्वमस्यादिना ऐक्योपदेशात् न प्रत्यगात्मनोऽर्थान्तरभूतः परमेश्वरोस्तीति शङ्कोत्तरत्त्वेनावतार्य्य तस्य सुषुप्त्युत्क्रान्त्योर्भेदेन पत्यादिशब्देभ्य इति तृतीयपादाकाशाधिकरणगुणसूत्रद्वयस्य भाष्ये च वहुतरभेदश्रुत्युदाहरणपूर्व्वकं तयोर्भेदव्यवस्थापनेन तान्यपि तयोरभेदपराणि न भवन्तीति प्रत्याख्यानं कृतम्। अंशोनानाव्यपदेशादित्यधिकरणे तु ब्रह्मैवोपाधिवशाज्जीवभावमापद्यत इति पूर्व्वपक्षनिराकरणार्थं प्रवृत्ते तत्त्वमसि अयमात्मा ब्रह्मेत्यादिकाद्व्यपदेशात् तयोर्जीवब्रह्मणोर्व्याप्यव्यापकभावेनानन्यत्त्वमिति योगिशरीराणां व्यापनीयानां तद्व्यापकस्य योगिनश्च यथा व्याप्यव्यापकभावेनापृथक्सिद्धिरूपमनन्यत्वम्। तथा जीवानां ब्रह्मणश्चेति साक्षादपि महावाक्यानामन्यपरत्वेन योजनं कृतम्। इदं सर्व्वं शुद्धाद्वैताभ्युपगमविरुद्धमेवेति चेत्। एतदपि सर्व्वमविरुद्धं यथा भवति तथोपपाद्यते। अधिकं तु भेदनिर्द्देशादिति सूत्रं जीवब्रह्मभेदव्यवस्थापनपरं न भवति किन्तु किञ्चिद्ज्ञत्वसर्व्वज्ञत्वादिभेदनिर्देशात् सार्व्वज्ञादिगुणैर्जीवादधिकं ब्रह्म। तथा च जीवे कर्तृत्त्वभोक्तृत्त्वादिकं वन्धः प्रातिभासिक इति जानतः तस्य तदापादनीयप्रपञ्चसृष्टिरनिष्टकारिणीति मूढस्य जीवस्येव तस्य भ्रान्तेरभावात्। "प्रतिविम्बगताः पश्यनृजुवक्रादिवि-

क्रियाः । पुमान् क्रीडेद्यथा ब्रह्म तथा जीवस्य विक्रिया ॥” इत्युक्तन्यायेन तस्य लीलार्थैव सा भवतीत्येतद्व्यवस्थापनपरम् । अन्यथा जीवब्रह्माभेदमवलम्ब्य शङ्कितस्य हिताकरणादिदोषस्य तयोर्भेदसाधनेनैव निराकरणीयत्त्वात् । अधिकमिति सौत्रप्रतिज्ञानमनुपयुक्तं स्यात् । यद्यप्यश्मादिवच्चतदनुपपत्तेरिति तदनन्तरसूत्रेणाश्मकाष्ठलोष्ठतृणादेरचेतनस्येव जीवस्याप्यज्ञत्वादिना सर्वज्ञत्वादियुक्तादीश्वरादत्यन्तविजातीयत्वश्रवणात्तयोरेकभावानुपपत्तेरिति तद्भाष्येण च जीवब्रह्मणोरभेदनिराकरणेन भेदव्यवस्थापनं कृतमित्याभाति; तथापि किञ्चित्सजातीयस्य जीवस्याप्यभेदो नोपपद्यते किमुतात्यन्तविजातीयस्याचेतनस्येति कैमुतिकन्यायेन जडवर्गस्य ब्रह्माभेदनिराकरणे तस्य तात्पर्य्यम् । अतएव तदनन्तरभाष्यं एवं चेतनस्याप्यधिकगुणवैषम्यादीश्वरभावानुपपत्तिः किमुताचेतनस्य स्वरूपविलक्षणस्येति तात्पर्य्यमिति । नच प्रपञ्चसृष्ट्याहिताकरणादिदोषे जीवब्रह्माभेदमवलम्ब्य शङ्किते तयोर्भेदस्य अभेदेऽपि न्यूनाधिकभावस्य वा व्युत्पादनेन तत्परिहारो वर्णनीयः जडवर्गस्य ब्रह्माभेदनिराकरणं नात्रोपयुज्यत इति वाच्यम् । अत्रानुपयोगेऽपि तदनन्यत्त्वमारम्भणशब्दादिभ्य इति सूत्रोक्तमनन्यत्वं जडवर्गस्य ब्रह्माभेदरूपं न भवतीति व्यवस्थापने तदुपयोगादतएवेतरव्यपदेशादित्यादीनि त्रीण्येतानि सूत्राणि भाष्यान्तरवदिह भाष्ये पृथगधिकरणार्थतया न योजितानि ॥

एवमधिकोपदेशादिति पुरुषार्थाधिकरणसूत्रमपि परमेश्वरो नाम कश्चन नास्तीत्यौपनिषदमात्मज्ञानं जीवगोचरमेव ज्ञानमिति पूर्वपक्षनिराकरणाय जीवाधिकः परमेश्वरोऽस्तीत्येतावन्मात्रप्रतिपादनपरम्। एवं सुषुप्त्युत्क्रान्त्यादिसूत्रद्वयमपि जीवाधिकपरमेश्वरसद्भावमात्रपरं न भेदव्यवस्थापनपरम्। अतएवैतेषां सूत्राणां भाष्येषु पूर्वपक्षे तदवलम्बनत्वेन लिखितानां तत्वमस्यादिवाक्यानां भेदपरतया योजनं न कृतम्। यद्यप्यंशाधिकरणभाष्ये तेषां भेदपरतया योजनं कृतमस्ति तथापि तदात्मेतितूपगच्छन्ति ग्राहयन्ति चेत्यधिकरणभाष्येण प्रत्याख्यातं न स्वार्थसाधनक्षमम्। तत्रहि मुमुक्षुभिर्ब्रह्मोपासनं स्वशेषित्वादिप्रकारेण स्वाभिन्नतयैव कार्य्यं नतु स्वात्मतयेति पूर्वपक्षनिराकरणार्थं प्रवृत्ते सिद्धान्तभाष्यं यद्यपि जीवाधिकमेव शिवाख्यं परं ब्रह्म तथाप्युपासिताऽहं ब्रह्मास्मीति तदुपासीत, यतः पूर्वेऽप्युपासितारस्त्वंवाहमस्मि भगवो देवते अहं वै त्वमसीत्यात्मेत्येवावगच्छन्ति, उपासितुरर्थान्तरत्वेऽपि तानुपासितृननुगृह्णाति स्वस्वरूपतया परं ब्रह्म ते च पुनः स्वात्मतया ग्राहयन्ति च परानपि शिष्यान् तत्त्वमसीत्यादिनेति। अत्र तत्त्वमस्यादिवाक्यानामवेदार्थत्वप्रदर्शनेन प्रागुक्तं शरीरशरीरिभावकृता पृथक् सिद्ध्यर्थं प्रत्याख्यानमिति स्पष्टमेव, तदुपपादनार्थमेव त्वं वा अहमस्मीति जाबालवाक्यमुदाहृतं यदि शरीरशरीरिभाव कृता पृथक् सिद्ध्यर्थं प्रत्याख्यानमिति स्पष्टमेव तदुपपादनार्थमेव

त्वं वा अहमस्मीति जाबालवाक्यमुदाहृतं यदि शरीरशरीरिभावनिबन्धनं सामानाधिकरण्यं तदा त्वं वा अहमस्मीति निर्देशो नोपपद्यत इति दर्शयितुं प्राक् प्रपञ्चितोऽयमर्थः तत्वमसि वाक्यस्याप्यभेदे एव स्वारस्यमित्यपि प्रागेव प्रपञ्चितम् ।

एतेनांशाधिकरणोक्तस्येदं प्रत्याख्यानं न भवति सूत्रारूढेनाधिकरणेन प्राग्व्यवस्थापितस्य स्वयमेव पश्चात्प्रत्याख्यानायोगात् किंत्वंशाधिकरणोक्तरीत्या दहरादिविद्यासु ब्रह्म स्वशरीरकत्वेन वाऽनुसन्धेयम् । अहंग्रहाधिकरणोक्तरीत्या भिन्नत्वेन वेति भाष्याभिप्रायो वर्णनीयः। एवं च ते च पुनः स्वात्मतया ग्राहयन्ति परानपि शिष्यान् तत्त्वमसीत्यादिनेत्यहंग्रहाधिकरणभाष्यवाक्यस्यापि तत्त्वमस्यादिवाक्यमभेदोपासनापरमित्येव तात्पर्य्यं वर्णनीयं नतु तात्त्विकाभेदपरमिति भेदाभेदयोर्विरुद्धत्वादिति शङ्काऽपि निरस्ता । जाबालवाक्यस्वरसविरोधेनासिशब्दस्वारस्यविरोधेन निरवधिकपरमानन्दमयशिवत्वप्राप्तिर्हि मुक्तिः शिवत्वप्राप्तिरात्मनः पशुत्वनिवृत्तिमन्तरेण न भवति, पशुत्वनिवृत्तिश्च न तद्भावभावनां विना,अतो निरन्तरं शिवोऽहमिति भावनाप्रकर्षेण शिथिलितपाशतयाऽपगतपशुभाव उपासकः शिव एव भवतीत्येवं शिवाभेदभावनां विना न मुक्तिरिति व्यवस्थापनार्थाहंग्रहाधिकरणभाष्यविरोधेन मुक्त्यर्थे शिवध्याने शिवादन्यत्वेन प्रतीयमानस्य सर्वस्यापि परित्याज्यत्वव्यवस्थापकाध्यानाधिकरणभाष्यविरोधेन नच तत्वमसि वाक्यस्यांशाधिकरणोक्तार्थे भा-

ष्यसम्प्रतिपत्तिकल्पनायोगात् जीवस्य ब्रह्मणा सह भेदाभेदयोरिव तत्त्वमसिवाक्यस्यैकस्य द्वयोरर्थयोरपि विरुद्धत्वेनांशाधिकरणोक्तं भेदार्थकत्वमङ्गीकृत्य पुनरभेदोपासनारूपमर्थान्तरमपि भाष्यकारैरङ्गीकृतमिति कल्पनायोगाच्च ॥

ननु तर्हि माभूत्तस्य शरीरशरीरिभावोऽर्थः, आरोपिताभेदोपासनारूप एकएवार्थोऽस्त्विति चेत् परमानन्दप्रकाशविभूतिमयशिवशक्तिसामरस्यपरब्रह्मस्वरूपैकरसप्रपञ्चावगाहिनं परिपूर्णमहंभावं प्रकटमनुभवतीतिमुक्तवृत्तान्तविषयविकारावर्त्तिसूत्रभाष्ये निवृत्तब्राह्मणादिदेहाभिमानमथपशुभावस्य निरतिशयस्वरूपानन्दसाक्षिस्वप्रकाशितरूपपरमभावापत्तिर्मुक्तिरिति सर्वश्रुतितात्पर्य्यादित्यहंग्रहाधिकरणभाष्ये च मुक्तावपि ब्रह्माभेदज्ञानस्यानुवर्त्तमानतायाः प्रतिपादितत्त्वेन जीवानां चिच्छक्तिद्वारकब्रह्माभेदस्य निर्वार्यत्वेन चाभेदोपासनस्यारोपितविषयत्वकल्पनायोगात् ॥

नन्वंशाधिकरणप्रतिपाद्यार्थनिर्वाहकतया तत्र स्वयं प्रदर्शितः शरीरशरीरिभावरूपोऽर्थः स्वयमेवान्यत्र प्रत्याख्यात इति कथमुपपद्यते नच वाच्यं शरीरशरीरिभावस्य तात्विकभेदगर्भत्वशङ्कामात्रमभेदार्थप्रदर्शनेन प्रत्याख्यानं नतु शरीरशरीरिभावरूपोर्थ इत्येकस्य वाक्यस्याभेदपरस्यातात्त्विकेऽपि शरीरशरीरिभावे तात्पर्य्यान्तरकल्पनायोगात् तत्र मन्दाधिकारिणः प्रथमं सगुणेश्वरोपासनायां प्रवर्त्तयितुं तत्र भक्त्यतिशयसिद्ध्यर्थं निर्विशेषपरतत्त्वप्रच्छादनेन तदुपछन्द-

नाय अतात्पर्यविषयोऽप्यर्थो गुडजिह्विकान्यायेन प्रदर्शित इति वाच्यम् । सगुणोपासनाऽपि हि शिवोऽहमित्यभेदेनैव कार्य्या । अतोजीवब्रह्मावबोधकवाक्यानां सएवार्थस्तदभेदोपासनारूपो वाऽर्थः प्रदर्शनीयः । उपासनप्रातिकूलार्थप्रदर्शनं तु न युक्तमितिचेत् । उच्यते । येषां मोक्षः परमपुरुषार्थ इत्यवगत्य तं प्राप्तुमभिलषतामपि साक्षान्मोक्षोपयोगितत्त्वावबोधार्थके श्रवणमननपूर्वके निर्विशेषनिदिध्यासने वा तदपेक्षितात्यर्थचित्तैकाग्र्यादिसम्पादनद्वारा तदुपयोगिनि दहरविद्यादिरूपे सद्विशेषोपासने सामर्थ्यादिरूपस्य लौकिकस्य शास्त्रीयस्य वाऽधिकारिविशेषणस्य वैकल्पान्नाधिकारपौष्कल्यम् । तानधिकृत्य प्रवर्त्तितोऽस्ति दासमार्गः पुराणेतिहासागमप्रसिद्धः स यद्यपि तत्कृतन्यायेन गाणपत्यादिरूपहिमगिरिकैलासादिस्थानगतशिवैकार्थप्राप्तिफलकः, तथापि तत्पदप्राप्त्यनन्तरं तत्रैवोपासनादिक्रमेण मोक्षफलकोऽपि भवति ॥

अतएव कामिके "मच्चिह्नधारिणोलोके देशिका मत्परायणाः ॥ मदेकशरणार्थेषु योगोनैवान्यजन्तुषु १ स्वाद्यानि चाटनीयानि पेयान्यन्यानि यानि च । देयानि तानि वै शम्भोराज्ञयाद्दासभावतः ॥ दासमार्गप्रपन्ना ये शैवे पाशुपते स्थिताः । तैरेव पेयं भोज्यं च घ्रातव्यं च मुमुक्षुभिरिति" शिवप्रसादयोग्यायोग्यविवेचने दासमार्गप्रपन्नेषु मुमुक्षुत्वाविशेषणम् । एवं चोपासनाद्यनधिकृताः स्थूलबुद्धयोऽस्मिन्दासमार्गे मुक्तिफलके प्रवर्त्तनेनानुग्राह्या इति तत्र तेषां रुचिमुत्पाद-

यितुं दासमार्ग एव सर्वस्यापि मोक्षशास्त्रस्यार्थ इति तदाचार्य्यैस्तेषु यद्वस्तु वक्तव्यमस्ति तदपि क्वचित्प्रदर्शनीयमित्यभिप्रेत्य तत्त्वमस्यादिवाक्यानां शरीरशरीरिभावरूपः स्वस्वामिभावोऽर्थ इति मतान्तरमंशाधिकरणे कल्पितमिति न कश्चिद्विरोधः ।

यत्वारम्भणादिश्रुतीनां अर्थान्तरकरणं तदपि सगुणविषयभक्तिदार्ढ्यप्रयोजनकमौपचारिकमर्थवादमात्रम् । इदमप्यश्मादिसूत्रभाष्येण प्रागुदाहृतेन विभावितं, तेन हि भाष्येण जडवर्गस्य ब्रह्मानन्यत्वं तदभेदरूपं न भवतीत्युक्तं, तेन तदनन्यत्वसूत्रोक्तं तस्य ब्रह्मानन्यत्वं ब्रह्मव्यतिरेकेण निर्वचनाक्षमत्वरूपमेव पर्यवस्यति तस्य ब्रह्माभेदाभावे ब्रह्माभिन्नचिच्छक्तिभेदस्याप्यसम्भवेन तस्य चिच्छक्तिपरिणामत्वोक्तेस्तद्विवर्त्ततायामेव पर्यवसानात् । अतो विकाराणामुपादानेन कल्पितत्वं वाऽरम्भणश्रुत्यर्थ इत्येव यथासूत्रकारमतिभाष्यकाराभिप्रायः ॥

सूत्रकारस्य तथामतिस्तु तेनैव प्रणीते महाभारते मोक्षधर्मेषूपदिष्टेन सुवर्चलाश्वेतकेतूपाख्यानेन विभाव्यते । एवं हि तत्रोपख्यायते—देवलस्य कन्या सुवर्चला जन्मान्तरसंसिद्धतया सहजसिद्धब्रह्मतत्त्वावबोधा स्वसदृशं पतिमन्विच्छन्ती श्वेतकेतुमुद्दालकसुतं तथाभूतमवगत्य वरं वृतवती, पित्रापि तस्मै दत्ता, ताभ्यां ब्रह्मतत्त्वावबोधवद्भ्यां दम्पतिभ्यां तदनुगुणेन यज्ञादिकर्माचरणयुक्तं गार्हस्थ्यमाश्रित्य स्थि-

तामिति तत्र तयोरित्थं ब्रह्मोद्यकथारूपसम्वादो वर्णितः; "ततः कदाचिद्भर्त्तारं श्वेतकेतुं सुवर्चला॥ पप्रच्छ कोभवाँस्तत्र ब्रूहि मे तद् द्विजोत्तम॥ तामाह भगवान्वाग्मी त्वया ज्ञातो न संशयः॥ द्विजोत्तमोऽहं सुभगे सत्यव्रतपरायणः॥ सा रमाऽऽहाहमात्मनं पृच्छामि हृदि शायिनम्॥ तच्छ्रुत्वा प्रत्युवाचैनां सर्व्वज्ञोमुनिपुङ्गवः। मनसैव श्रमोयुक्तमात्मानं मन्यसे यदि॥ तन्मिथ्यागोत्रसद्भावे वर्त्तते देहवन्धनम्। अहमित्येष भावोऽत्र त्वयि चापि समाहितः॥ त्वमहमहं सर्व्वमहमित्येव वर्त्तते। नात्र तत्परमार्थं तद्यन्मां त्वमनुपृच्छसीति"॥ अत्र सद्विद्यायां तत्त्वमसीत्यसकृत्पित्रोपदिष्टः श्वेतकेतुः कथमात्मानमववुध्यत इति जिज्ञासमानया सुवर्चलया प्रथमं कस्त्वं द्विजोत्तमेति प्रश्नः कृतः तत्प्रश्नाभिप्रायमवगच्छताऽपि श्वेतकेतुना क्रमेण तमर्थं सा वोधनीयेति मत्वा तत्रोत्तरमुक्तं द्विजोत्तमेति सम्वोधयन्त्या त्वया ब्राह्मणोऽहमित्यवगत एव किमत्र प्रष्टव्यमिति। ततः सुवर्चलया देहोपाधिकत्वेनात्मनि कल्पितं प्रत्यक्षं ब्राह्मण्यं न पृच्छामि किन्तु द्विजोत्तमोऽहमित्यहंशब्देन देहाद्विभक्तं हृदि वसन्तं यमात्मानं निर्द्दिशसि तं पृच्छामीत्युक्ते तत्रोत्तरमुक्तम्, अहंशब्दो मनःशवलितात्मस्वरूपे वर्त्तते, अतोब्राह्मणरूपवत्कल्पितविषयत्वादहंभावोप्यात्मस्वरूपजिज्ञासुभिर्न प्रष्टुमर्हः। अयं चाहंभावस्तव मम च तिर्यक्पर्य्यन्तानां सर्वेषां च साधारण इत्ययं प्रश्नः परमात्मविषयत्वाभावादात्मस्वरूपं जिज्ञासमानया त्वया कर्त्तुं नार्ह इति तदनन्तरं कर्तृत्वभो-

कर्तृत्वादियुक्तमर्थं यदि कल्पितमवगच्छसि तर्ह्येवमवगच्छन् त्वं कथं तद्विरुद्धकर्मानुष्ठाने प्रवर्त्तस इति प्रश्ने कृते, अनुपकारकेऽपि तस्मिल्लोकसङ्ग्रहार्थं प्रवर्त्तत इत्युत्तरमुक्तम् । तदनन्तरं सर्वैरात्मनि प्रयुज्यमानोऽहंशब्दःकथं तदर्थो न स्यादित्यभिप्रायेण शब्दार्थयोः सम्बन्धप्रश्ने कृते तयोर्नास्ति संयोगादिरूपः सम्बन्धः किन्तु व्यक्तमात्मनि श्रिताः न वाचस्तत्र वर्त्तन्त इति यदि मिथ्या भविष्यति । श्वेतकतुः । अहं शब्दोऽहं भावेनात्मभावे शुभव्रते ॥ न वर्त्तन्ते परे चिन्त्ये वाचस्सगुणलक्षणाः । सुर्वचला । अहं भावोऽत्र को नाम मानाभावस्तथैव च । तन्मे ब्रूहि यथान्यायमेवं चेन्मुनिसत्तम । श्वेतकेतुः । मृन्मयोहि घटाभासस्तादृग्भाव इहेक्ष्यते ॥ अहं भावः परे चिन्त्ये ह्यात्मभावः परो महान् ॥ तस्माद्वाचो निवर्त्तन्त इति नैव विरुध्यते" इति मम च शब्दार्थयोर्वाच्यवाचकः सम्बन्धोऽस्ति चेदहंशब्दः कथमात्मवाचके न स्यादिति प्रश्ने कृते अहंशब्दो नात्मनि मुख्यवृत्त्या प्रयुज्यते किन्त्वहमर्थ इत्युत्तरमुक्तम् । ततः कोनामाहमर्थादन्य आत्मेति प्रश्ने कृते मृदि घटाकारवदात्मन्यहंभावः कल्पित इति तयोर्विवेकं कृत्वा कल्पिताकारोऽप्रधानेन प्रवर्त्तमानः शब्दो न शुद्धाधिष्ठानपर्य्यन्तं प्रवर्त्तते शुद्धशुक्तिस्वरूपे रजतादिशब्दवत्, अतः कर्तृत्वादिगुणकाहमर्थवाचकशब्दस्य शुद्धात्मनः सकाशान्निवृत्त्युक्तेर्न कश्चिद्विरोध इत्युपसंहृतम् । अनन्तरमहमर्थान्निष्कृष्ट आत्मैव सकलप्रपञ्चाधिष्ठानभूतं ब्रह्मेति सिद्धवत्कृत्य यथा-

ऽऽकाशे प्रपञ्चस्य दृश्यमानत्वेऽपि तदसाङ्गित्वमाकाशस्य एवं ब्रह्मणोऽपीत्यसङ्गित्वे ब्रह्मणः श्वेतकेतुनोपपादिते पुनरिमे प्रश्नोत्तरे "सुवर्चला । निर्व्विकारं ह्यमूर्त्तं च निरंशं सर्व्वगं तथा ॥ दृश्यते च वियन्नित्यं तादृगात्मा न दृश्यते ॥ श्वेतकेतुः । त्वचा स्पृशति वै वायुमाकाशस्थं पुनः पुनः॥ तत्स्थं गन्धं तथा घ्राति ज्योतिः पश्यति चक्षुषा ॥ तमोरश्मिगणं चैव मेघस्थलं तथैव च॥ वर्षं तारागणं चैव नाकाशं दृश्यते पुनः ॥ आकाशस्याप्यथाकाशं सद्रूपमिति निश्चितम् ॥ सदर्थे कल्पितं ह्येतत् तत्सत्यं विष्णुरेव च॥ यानि नामानि गौणानि कुंपचारात्परात्मनि ॥ न चक्षुषा न मनसा नचात्मे न परो विभुः ॥ चिन्त्यते सूक्ष्मया बुद्धया वाचा वक्तुं न शक्यते ॥ ये तत्प्रपञ्चमखिलं तास्मिन्नेव प्रतिष्ठितमिति ।" अत्राकाशवत्प्रपञ्चाधिष्ठानं ब्रह्म न दृश्यत इति प्रश्ने वाय्वादेराकाशस्थस्यैवानुभवोऽस्ति नतु विविच्याकाशस्य,यदैवमाकाशे लौकिकेप्येषा गतिः तदा किमु वक्तव्यं आकाशादप्यतिसूक्ष्मे सद्रूपे ब्रह्मणि, अतः सदर्थे कल्पितं सर्व्वं तदेव सत्सत्यं व्यापकं च, गुणोपाधिना प्रवर्त्तमानाः सर्व्वे शब्दाः गुणेभ्यो निकृष्टे तस्मिन् तत्त्वावेदकप्रमाणैर्बोध्ये मुख्यवृत्या न प्रवर्त्तन्त इत्युत्तरमुक्तम् । अस्यां हि प्रश्नोत्तरपरम्परायां मृन्मयो हि घटाभास इति दृष्टान्तोक्त्या वाचारम्भणश्रुत्यर्थः सद्रूपमिति निश्चितमिति प्रकृतस्य जीवस्य सद्रूपत्वोक्त्या तत्त्वमसिवाक्यार्थः "सदर्थे कल्पितं ह्येतत्तत्सत्यं विष्णुरेवचे"त्युक्त्या एतदात्ममिदं

सर्व्वं तत्सत्यं स आत्मेति श्रुत्यर्थश्च निष्प्रपञ्चजीवाभिन्ननिर्व्विशेषब्रह्मासिद्ध्यनुकूलो दर्शित इति स्पष्टैवात्र सूत्रकारमतिः ॥ किञ्च मोक्षधर्म एव प्रदेशान्तरेषु "निःकेवलं पदं देव काङ्क्षयं परमं तव ॥ एकीभावस्त्वया मेऽस्तु न मे जन्म भवेत्पुनः ॥ भेदवस्तुष्वभेदेन जानाति स यदा पुमान् ॥ तदा परः परात्माऽसौ भवत्येष निरञ्जनः।" इत्यादिभिरभेदः प्रतिपादितः। "नभूतसङ्घसंस्थाने देहोऽस्य परमात्मनः॥ देहवानिव योविष्णुरसौ मायामयोहरिरि"त्यादिभिर्नीरूपत्वादिकं प्रतिपादितम् ॥ विष्णुपुराणादिषु च "प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् । वचसामात्मसम्वेद्यं तज्ज्ञानं ब्रह्मसंज्ञित" मित्यादिभिर्ब्रह्मणोनिरस्तसमस्तभेदनिर्विशेषचिन्मात्ररूपत्वमुक्तं, ततः शुद्धाद्वैतमेव सूत्रकाराभिमतमिति तदीयहृदयानुसारेण तत्र तत्र प्रदेशे भाष्यकारैः शुद्धाद्वैतस्य वहुधा विभावितत्वात्तदनुसारेणैव प्रदेशान्तरेषु विशिष्टाद्वैतप्रतिपादनस्यास्मदुक्तरीत्याऽभिप्रायो वर्णनीयः ॥

यत्तु परेषां भाष्ये विशिष्टाद्वैतनिरूपणं, यच्चान्येषां भाष्ये शुद्धाद्वैतनिरूपणं तत्तु तदेव तत्त्वमित्यभिप्रायेण नतु श्रीकण्ठाचार्य्याणामिव तेषां शुद्धाद्वैतसंमतौ तात्पर्य्यं कल्पयितुं शक्यम् । श्रीकण्ठाचार्य्यैरिव तैः क्वापि शुद्धाद्वैतव्यञ्जकस्य प्राक्वर्णितस्यार्थस्य कस्याप्यप्रतिपादितत्वात्, तत्तद्भाष्यकारप्रभृतिभिरद्यतनपर्यन्तैः सर्व्वैरपि परैरन्यैश्च शुद्धाद्वैतनिराकरण एव संनह्यमानत्वाच्च । अतः प्रामाणिकानां निर्व्विशेषस्य

परब्रह्मणस्तत्त्वावबोधार्थं तस्यैव साधकानुग्रहणयसविशेषापन्नस्य निखिलकल्याणगुणगणदिव्यमङ्गलविग्रहविशेषविशिष्टस्य मध्यमाधिकारिकर्त्तव्याभेदोपासनार्थं अधमाधिकारिकर्त्तव्यस्वस्वामिभावोपासनार्थं च तस्य सर्व्वस्यापि यथावद्विशिष्य प्रतिपादकं श्रीकण्ठाचार्याणामेव भाष्यमुपादेयमिति सर्व्वं समञ्जसम् ॥

इतिश्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्री विश्वजिद्याजिश्रीरङ्गराजाध्वरि (व) सूनोरप्पय्यदीक्षितस्य कृतिः

शिवाद्वैतनिर्णयः सम्पूर्णः * ।

सम्वत् १९४३ समये माघशुदि १२ बुधवासरे "लिखितात्पुस्तकान्मुद्रितः"॥



* पञ्चविंशतिपृष्ठमारभ्य ग्रन्थोऽसौ मणिरामशास्त्रिणा संशोधितः ॥